**पुस्तकपरिचयः**

एतद्पुस्तकं संस्कृतजिज्ञासुभ्यः वरदानरूपं। एतस्मिन् पुस्तके संस्कृतस्य सर्वसाधारणाः शब्दाः उपयुक्ताः सन्ति। पुराणप्रेमीपाठकेभ्यः अपि एतद्पुस्तकं महत सहायकं। एतत् पठित्वा पाठकाः पुराणान् मूलसंस्कृतभाषायां पठितुं अर्हन्ति, किंचित् हिन्द्यनुवादं आश्रित्य।

भाषा व्याकरणेन न अपितु अभ्यासेन शिक्षितुं अर्ह्यते। बहवः जनाः व्याकरणे संलग्नाः क्लिष्टाः च भवन्तः पुराणानां मूलसंस्कृतरसात् वंचिताः भवन्ति। अनेन सह चेत् एकं साधारणं अनुवादपुस्तकं, एकं संस्कृतात् हिन्दीप्रति शब्दकोशः एका शब्दरूपावली एका च धातुरूपावली सहयुज्यन्ते, तर्हि एतत्पुस्तकं एकं उच्चकोटिकं संस्कृतशिक्षकः भवितुं अर्हति।

एतत्पुस्तकं शरीरविज्ञानदर्शनस्य मूलपुस्तकं, येन् हिन्दीभाषायां 'शरीरविज्ञान दर्शन- एक आधुनिक कुण्डलिनी तंत्र (एक योगी की प्रेमकथा)' इत्येतत् पुस्तकं विरचितं।

एतत्पुस्तकं शरीरे प्रतिक्षणं प्रचलितानां आश्चर्यजनकघटनानां संबन्धे। एतत् पुस्तकं पिण्डब्रह्माण्डयोः ऐक्यस्य वैज्ञानिकसिद्धित्वाय। एतद्पुस्तकं शरीरस्य वर्णनं चिकित्साविज्ञानानुसारं करोति अपि च तत् विज्ञानं अध्यात्ममूलं इत्येतत् अपि प्रदर्शयति। एतत् पुस्तकं अद्वैतस्य अनासक्तेः च मूलभण्डाररूपं। एतत् पुस्तकं अतीव रुचिकरं। पाठकाः एतत् पुस्तकं पठित्वा अवश्यमेव लाभान्विताः भविष्यन्ति।

एतत्पुस्तकसंबन्धे अन्याः सर्वाः ज्ञानोक्तयः 'demystifyingkundalini.com' इत्येतत् सूचनाजालस्थाने वर्णिताः सन्ति।

पुस्तक प्रेमी इस लिंक पर क्लिक करके पुस्तक के बारे में अच्छी तरह से जान सकते हैं, तथा साथ में इस पुस्तक के निःशुल्क संस्कृत-संस्करण को भी डाऊनलोड कर सकते हैं।

**वैधानिका लघुवार्ता**

एतद्पुस्तकं तांत्रिकसंपन्नं। एतत्पुस्तकं किंचिदपि जनमानसधारणां न अवहेलयति। एतस्मिन् पुस्तके सर्वाः ज्ञानोक्तयः गूढ़विचारणोपरान्तं एव पाठकानां शिक्षणार्थं लिखिताः। ततः अपि केचिदपि हानिकरे पाठकाः स्वयमेव उत्तरदायिनः। धन्यवादम्।

## समर्पणं

एतत्पुस्तकं प्रथमतः तंत्रादिगुरुशिवाय समर्पितं। द्वितीयतः एतत् प्रेमयोगीवज्रस्य पूज्यपितामहाय शिवावतररूपाय समर्पितं। त्रितीयतः एतत् पुस्तकं भारतमात्रे समर्पितं। अंततः एतत् पुस्तकं भारतीयसेनायै समर्पितं।

लेखनकला एका श्रेष्ठतमासु कलासु गणनीया कला अस्ति यतोहि एषा मस्तिष्कं विचारान् वा अनासक्तिम् विना अभिव्यक्तम् करोति येन अद्वैतं अनुभूयते स्वरूपे आत्मशान्तिः च लभ्यते। यथा शुद्धं जलं सर्वत्र एव शुद्धिकरोति तथैव देहस्थः लघुतमस्वतन्त्रदेहरूपः देहपुरुषनाम्ना विख्यातः सजीवपुरुषः अपि जीवविकासेन सर्वत्रैव आनन्दं वर्धयति येन देहपुरुषः आनन्दस्वरूपः एव सिध्यति। देहसमाजः पूर्णयुक्तियुक्तकर्मठतया अद्वैतस्वरूपेण वर्तते। अनेन सिध्यति यत् वास्तविकमानवविकासः देहपुरुषवत् अनासक्तिसह युक्तियुक्तसर्वहितकारीकर्मभिः जायते नान्यथा यतोहि आसक्त्या सह लक्षोपाये कृते अपि सर्वहितकारिता न संभवति। वेदसाररूपब्रह्मज्ञानं अनासक्त्या एव उद्भवति यत् शरीरविज्ञानदर्शनविचारणेन एव सर्वसुगमतया उत्पद्यते। अतः सिध्यति यत् देहपुरुषाः वेदज्ञपुरुषाः तथा देहसमाजः एकः सर्वजनमुक्तसमाजः अतः पूर्णः।

स्वसत्ताप्रति आकर्षणं सजीवनिर्जीवोभयप्रकारजगतोः स्वभावः। निर्जीवाः घटनायाः उपरान्तमेव स्वसत्तारक्षणार्थं प्रयतन्ते तद्घटनासन्केतकमनबुद्धिविचाराद्यन्तःकरणाभावात्। उदाहरणतः यथा गदाप्रहारे शिला। परं सजीवः प्रागनुभवस्मरणेन श्रवणेन वा पठनेन वा बुद्धिविश्लेषणसंभूतानुमानेन वा घटनाकारकं तत्परिणामं च मनसि ध्यात्वा ततः बुद्ध्या निश्चित्य स्वसत्तां रक्षति। अपि च गदायुद्धानभिज्ञपुरुषः गदाप्रहारपूर्वं एव अपसरति परं गदायोद्धा गदां प्रतिकर्तुं अपि समर्थः गदया वा हस्तेन वा पादेन वा अतः तत्रैव तिष्ठन् केवलं आपातकाले एव अपसरति। निर्जीवशिला विज्ञानाधारैः,अत्यधिकसटीकतया पूर्वनिर्दिष्टैः सामान्यसाधारणैः च भौतिकनियमैः आत्मानं रक्षति परं सजीवगदायोद्धा स्वमस्तिष्कनिर्दिष्टेन अनेकप्रकारतः स्वदेहसन्चालनेन अतिरिक्तसुरक्षां आप्नोति। देहपुरुषः अपि पूर्णतः सजीववत् एव स्वमस्तिष्कक्रियाशीलतां प्रदर्शयति परं सः तद्वत् एतया न निबध्यते येन सः अद्वैतपूर्णानासक्तापरिवर्तनशीलजीवनमुक्तपुरुषस्वरूपः एव सिध्यति स्थूलपुरुषसदृशजीवनचर्यापरिप्रेक्ष्येण। अतः देहपुरुषः पुरुषोत्तमरूपः एव अस्ति।

अद्वैतभावसंपन्नपुरुषः देहपुरुषवदेव ईश्वरनिर्दिष्टानि मानवसेवारूपसर्वकर्माणि स्वकर्तव्यपूर्त्यर्थं एव करोति नैव सुखप्राप्त्यर्थं तदद्वैतसिद्धनिर्विकल्पात्मानन्दत्वात्। पुरुषशब्दः अत्र मनुष्यद्योतकः। देहपुरुषवत् क्रियाशीले भूते अपि अद्वैतं केवलं चिदाकाशात्मस्वरूपात् एव संभवं संकल्पानां चिदाकाशान्शस्वरूपत्वात् । देहपुरुषः पुरुषः च पूर्णतः एकरूपौ स्तः एकमात्रधारणाभिन्नतया यत् देहपुरुषः अनासक्तधारणासंपन्नः अतः पूर्णचेतनरूपः परं पुरुषः आसक्तधारणासंपन्नः अतः पूर्णचेतनताविस्मृताल्पचेतनात्मस्वरूपः।

देहदेशे सर्वोत्कृष्टकर्मविभाजनं विद्यते। सर्वदेहपुरुषाः समूहेषु एव वर्तन्ते नैव एकाकिनः। कश्चिद्पुरुषसमूहः संपूर्णदेहदेशे अन्नं वाहयति सर्वदेहपुरुषभोजनार्थं। कश्चित्समूहः देहदेशकृषकैः उत्पादितान्नस्य अपाच्यान्शं पशुपालकेभ्यः प्रयच्छति येषां अश्वाजधेन्वादिसमस्तपाल्यपशवः समस्तदेहदेशार्थं दुग्धं, वस्त्रादि अनेकवस्तूनि तथा मनोरन्जनयातायाताद्यनेकसुविधाः प्रापयन्ति। अनेन सह निर्मलीकरणविभागः अपि सहयुज्यते। कश्चित् देहदेशः विकसितः, कश्चित् विकासशीलः। स्वनाशपूर्वं मातृदेशः स्वसदृशपुत्रदेशान् निर्माति। मातृदेशानुसारं एव कश्चित् देशः मूढ़शासकः, कश्चित् तीव्रबुद्धिशासकः। देहदेशे अपि अधिकारिणां शिक्षकाणां वा एका दीर्घपरंपरा विद्यते। तत्र सर्वे उच्चाः स्वोच्चेभ्यः शिक्षन्ति। सर्वोच्चशिक्षकाः अतिसुरक्षितसर्वसुविधासंपन्नवातानुकूलितनगर्यां निवसन्ति। कदाचित् समाजाहितकरोच्चादेशं तदनुसरणकर्तारः नैवापि पालयन्ति। केचनपुरुषाः देहदेशसीमासु तिष्ठन्तः अवैधप्रवेशावरोधनार्थं सकन्टकरज्जुभित्त्यादिसीमाबन्धकान् स्थापयन्तः भवन्ति। एकसमूहस्य कार्यं अवैधप्रविष्टबाह्यशत्रूणां व्यापादनं भवति। मुख्यद्वारेण वैधप्रविष्टमित्रपुरुषेभ्यः देशीयसीमाप्रान्ते मुख्यराजमार्गनिकषा देशसेवावसरं प्रदीयते यद्विनिमये ते देहदेशस्य अतिरिक्तसन्साधनैः जीवनयापनसह देहसमाजसंरक्षणं अपि लभन्ते। केचन जनाः कृषकाः ये संपूर्णदेशार्थं विविधान्नानि उपजनयन्ति। केचन विद्यार्थिनः आधारभूतशिक्षाप्राप्त्युपरान्तं चिकित्साशिक्षायां उपाधिं लब्ध्वा रोगिणः चिकित्सयन्ति। एकसंगठनं शिल्पिजनानां विद्यते यत् मार्गग्रामनगरादिसंरचनानिर्माणं तत्क्षतिपूर्तिं च कुर्वन् भवति।

ईश्वरेच्छावत् देहपुरुषेच्छा अपि मानवस्य सर्वोत्तमलाभार्थं कर्मपूर्णा अस्ति येन सिध्यति यत् देहपुरुषाः ईश्वररूपाः एव। वास्तवेन सर्वे देहदेशविभागाः तद्देशजन्मना एव निर्मिताः सन्ति एकविभागाभावादपि देहदेशासंभवात् अतः संसाधनवृद्धिकाले पूर्वनिर्मितविभागाः एव प्रचुरतया आपूर्यन्ते सुदृढ़िक्रियन्ते च। केचन विभागाः अतिक्रियाशीलाः अतः तत्पुरुषाः अत्यधिकनिष्ठया अनासक्तिं आचरन्ति तथा लघुविश्रामकाले अपि स्वचिदद्वैतस्वरूपं ध्यायन्ति यत्संचितशक्त्या ते कर्मजातात्मभ्रमान्धकारे न निपतन्ति फलतः कठिनश्रमात् कदापि न निवर्तन्ते कार्यनिर्वाहकचित्तवृत्तिभिः आत्मपोषणात् परं आसक्ताज्ञानीपुरुषः शीघ्रमेव स्वकर्तव्यं जहाति तत्चित्तवृत्तिभिः तदात्ममोषणात्।

देहदेशे सदैव नवजाताः उत्पद्यमानाः भवन्ति ये प्रतिक्षणम्रियमाणपुरुषान् प्रतिस्थापयन्ति। ते प्रियाः,कोमलाः,सुन्दरदर्शनाः परं कार्याकुशलाः। संपूर्णदेशः पूर्णतत्परतया सुरक्षया च तत्पालनपोषणं विदधाति। बाल्यकाले ते साधारणशिक्षकैः परिवारजनैः च खादनपिबनचलनहसनक्रीढ़नपठनलेखनादिसरलविद्याः शिक्षन्ति। तत्किञ्चित्वार्धक्ये विशिष्टप्रशिक्षकजनाः तान् विशिष्टपुस्तकैः जटिलविद्याः प्रशिक्षयन्ति तद्वंशानुसारमेव येन सर्वे युवाजातबालकाः स्वप्रकृतिस्वभावानुसारमेव कार्यभारं गृह्णन्ति अर्थात् एकविशेषसमूहयुवाः तत्समूहविशिष्टकार्यमेव कुर्वन्ति यस्मात् उत्कृष्टकार्यदक्षता जायते। देहपुरुषाः अनेकविधक्रीड़ाः अपि प्रदर्शयन्ति येषु एका पुरुषयुद्धाभ्यासवत् शत्रुप्रतिरूपमारणरूपा अस्ति।

चेत् देहसमाजे एतद्जटिले अपि देहपुरुषाः पूर्णरूपेण अनासक्ताः तिष्ठन्ति तर्हि पुरुषाः अपि अपेक्षाकृतसाधारणस्थूलसमाजे किमर्थं न? मिथ्याचित्तोदरः आत्मा एव जीवनाम्ना ख्यातः। स्वचित्ते आसक्त्या तद्जीवेन स्वमूलात्मस्वरूपः एव विस्मृतः चित्तस्य

आत्ममोषकस्वभावात्। सूक्ष्मपुरुषात्मा ईश्वरः चिदाकाशः वा चित् वा चिद्घनः वा परमपटुः कदापि स्वात्मस्फुरणरूपचित्तं न अन्वभवत्, चित्तास्वादनस्य ततः आसक्तेः तु प्रश्नः एव न उद्भवति। यथा अनहङ्काररूपात्मप्रकाशेन अहङ्काररूपात्मान्धकारः विलुप्यते तथैव चित्तप्रत्यनासक्तिभावात् आचिरकालात् संचितासक्तिभावः तत्कार्यबन्धनसह विनश्यति अर्थात् पुरुषेण सूक्ष्मपुरुषस्वरूपा जीवनमुक्तिः प्राप्यते अपि च सूक्ष्मपुरुषभावनेन अनासक्तिः स्वयमेव उदेति। एतदेव शरीरविज्ञानदर्शनसारं। 'चित्' इत्येषः शब्दः चिदाकाशस्य शुद्धचेतनायाः वा पर्यायवाची परं 'चित्तं' इत्येषः शब्दः मनसः अशुद्धचेतनायाः वा पर्यायवाची। चिदाकाशस्य अंशत्वात् 'चित्तं' शब्दः प्रकटितः।

यथा संस्कृतप्रचारेण संस्कृतज्ञप्रसन्नता तद्संस्कृतज्ञानप्राप्तिः च तथैव सच्चिदानन्दप्रचारेण अर्थात् मानवत्या सच्चिदानन्देश्वरप्रसन्नता तद्स्वरूपप्राप्तिः च । यथा शास्त्रीयाचारविचारैः मनसि शुद्धे एव शास्त्राणि आनन्दकराणि प्रतीयन्ते अतः परिशील्यन्ते तथैव शरीरविज्ञानदर्शनेन किंचिन्निर्मलीभूतात्मा एव स्वसंपूर्णशोधनार्थं अध्यात्मशास्त्राभिमुखः भवति यदेव एतद्दर्शनस्य मुख्योद्देष्यं।

देहपुरुषाः फलेच्छाहीनाः अनासक्ताः च सदैव जीवपोषणे तोषणे च तल्लीनाः एककर्मयोगीसाधुवत्। देहपुरुषेषु मिथ्याभासितानां चिदाकाशखण्डसंकल्पानां नितान्ताभावः आकाशखण्डनासंभवात् यद्यपि ते जड़ाः न सन्ति पूर्णतः संकल्पशीलदेहपुरुषसादृश्यात् चेतनतावर्धकस्वभावाच्च येन ते परमचेतनचिदाकाशरूपाः एव सिध्यन्ति जड़संकल्पकृताल्पचेतनपूर्णचेतनत्रिरूपाणामेव अस्तित्वात् तथा उपरयुक्तानुसारं यत्किन्चित्सर्वेषां स्वभावप्रचारकत्वात्। अपि च गूढ़चिन्तनात् समस्तपदार्थाः देहपुरुषवत् एव आचरन्तः प्रतीयन्ते अतः सिध्यति यत् सोदरस्थसमस्तसृष्टिः चिदाकाशस्वरूपा अर्थात् यत्किञ्चित्सर्वं अद्वैतं।

चलनभ्रमणव्यायामक्रीड़ादितीव्रमनोसंवेदनजनकक्रियाः अनासक्तिम् उत्पादयन्ति तत्प्रति ध्यानाभावात् यदेव तीव्रक्रियया व्यर्थसंवेदनालाभत्वात्। प्रेम्णा अनासक्तिः उदीयते सुरक्षाभावनया। एवमेव आदेशो अपि अनासक्तिं जनयति परं नैव आनन्दातिरेकं परमहितभावनाभावात्। सीमितमदिराप्रयोगादपि आत्मानन्दं यद्यपि क्षणिकं अनुभूयते गूढ़चिन्तनस्तंभनसिद्धानासक्त्या। एतादृशाद्वैतानुभवः मिथ्या, क्षणिकः, सापेक्षः अनासक्त्यतिरेकाकारकः च यतोहि रसायनादिचित्तबाधकबलाभावे अत्युत्तेजितचित्तप्रति तीव्रासक्तिः दृढात्मबन्धनं जनयति अनासक्त्यभ्यासाभावात्। अतः पूर्णाद्वैतं केवलं न्यूनतमसापेक्षाभ्यासादेव संभवं। अपि च बहुभिः मनसः उत्तेजनावसादनिरोधनार्थापेक्षिताभ्यासाभावात् बारम्बारं बाह्यकारकाः उपयुज्यन्ते ये देहहानिकराः, पापकराः अल्पप्रभावाः च। एतदभ्यासः शरीरविज्ञानदर्शनेन अतिसुगमः। बालकाः ईश्वरसदृशाः केवलं अनासक्त्या। संगीतः अपि अनासक्तिजनकः मनसा अव्यवहारिकस्वर्गिककल्पनासह घनिष्ठसंबन्धात्।

कलाध्ययनपरिश्रमविद्यावाहनादिपरिचालनहास्यविनोदरीतिप्रथाकथासत्संगकर्मकाण्डज्योतिषमूर्तिपूजासंदर्भशीलत्वाव्यवहारिककल्पनालोकादिसमस्तक्रियाभावाः पूर्णानासक्तिकराः अतः उभयलोकश्रेयस्कराः चेत् अध्यात्मशास्त्रीयविधिना अथवा शरीरविज्ञानदर्शनेन अनुष्ठीयेम अन्यथा अल्पानासक्तिकराः अतः इहलोकश्रेयस्कराः एव। वास्तवेन संपूर्णपृथ्वी एव अनासक्तिकरी तत्सर्वघटनानां क्रमबद्धत्वात् धैर्यत्वात् च ज्ञानीवत् नैव आकस्मिकत्वात् अन्यान्तरिक्षीयपिण्डवत् अज्ञानीवत् च अतः पृथ्वी महास्थूलपुरुषः वयं यस्य देहपुरुषाः। ईश्वरेण स्वमायया स्वात्मनः मिथ्याप्रतिबिम्बमध्ये मिथ्यास्फुरणाः जनिताः मिथ्यासौन्दर्यप्रदानार्थं। एतद्विचित्ररचना जीवनाम्ना विख्याता। स्फुरणासक्तिः एव जीवबन्धनकारणं। बन्धनम् कथ्यते यतोहि चिदाकाशात्मा मस्तिष्कस्फुरणरज्जुभिः कारावासी अपराधीवत् पशुवत् वा। देहपुरुषवत् अन्यवत् वा अद्वैताभ्यासेन एव जगद्ब्रम्होभयसिद्धिः नान्यथा।

संकल्पनाशात् न संकल्पाभावः अपितु अनेन संकल्पाः अज्ञानकलारूपिणः अत्यल्पचेतनसूक्ष्मरूपान् गृह्णन्ति ये उपयुक्तकाले पुनः स्थूलायन्ते। संकल्पनाशः केवलं तत्प्रति अनासक्त्या एव जायते येन संकल्पाः स्वचिदाकाशाधारे मिथ्यास्फुरणरूपाः प्रतीयन्ते। एवमेव संकल्पाः वर्तमानाः अपि नष्टाः एव आत्मविकाराभावात्। यावत् तरङ्ग्म् न ध्यायमानेन केवलं सागरः एव विचिन्त्यते तावदेव मुक्तावस्था अवतिष्ठते। चिदाकाशविस्मरणात् तदोर्मिप्रति गम्भीरध्यानात् एव चित्तोर्मिप्रति आसक्तिः येन पूर्वाधिकात्मविस्मरणं येन पूर्वाधिकासक्तिः। एवमेव आसक्तिः आत्मविस्मरणं च परस्परं वर्धयन्तः भवन्ति। चित्तप्रति गम्भीरध्यानं न अवान्छितम् परं तद्कोलाहलमध्ये तदाधारचिदाकाशविस्मरणं एव अवान्छितम्। वास्तवेन चित्तवृत्तिभिः एव चिदाकाशानुमानं ततः तद्ध्यानं संभवं परस्पराधाराधेयसंबन्धात्। देहपुरुषवत् सर्वयथाप्रकटमानवीयकर्मसह एतत्संबन्धस्मरणात् एव देहपुरुषाद्वैतस्वरूपः प्राप्यते। वास्तवेन देहपुरुषमननसंभवेन आसक्तिरहितमानवीयाचरणेन अर्थात् वेदोदिताचरणेन अर्थात् मानवतापरकाचरणेन एव ज्ञानशिखा प्रज्जवलति। एतेषु प्रथमविधिः व्यवहारिकतमा शीघ्रतमेण च फलप्रदा भौतिकवादिभिः उत्पथगामिभिः च अनुकृता चेत्। अनेन सिध्यति यत् शरीरविज्ञानदर्शनं सार्वभौमिकं। यत्कर्माणि शरीरविज्ञानदर्शनाज्ञानिभिः बन्धनकराणि तानि तद्ज्ञानिभिः मुक्तिकराणि।

चित्तवृत्तिभावाभावाः देहपुरुषेषु अपि प्रतिक्षणं बोभूयमानाः भवन्ति परं ते सदैव तैः अप्रभाविताः अतः समरूपाः तिष्ठन्ति अनासक्त्या परं पुरुषाः तैः प्रभाविताः स्वात्मरूपं त्यजन्ति आसक्त्या यदेव परमदुखकारणं। अद्यतनकाले महदोद्योगपतयः अपि मुक्तिं न लभन्ते तद्कर्माचरणस्य आसक्तिपूर्णानुचितविधिना परं परमोद्योगीदेहपुरुषाः अनासक्तिपूर्णयुक्तियुक्तविधिना एव मानवीयकर्माणि कुर्वन्ति अतः अद्य शरीरविज्ञानदर्शनाध्ययनं अनुकरणम् च अत्यावश्यकं। यतोहि वयं सृष्टिविस्तारम् देहपुरुषेच्छाम् पूरयितुमेव संलग्नाः अर्थात् तत्किंकराः अतः यथा आज्ञाकारीसेवकः स्वामिनं प्रतिक्षणं मनसि आधाय एव सर्वथा आचरति तथैव अस्माभिः अपि स्वपूर्वजदेहपुरुषवदेव। वास्तवेन सर्वपुरुषाः न्यूनाधिकरूपेण देहपुरुषमेव अनुकुर्वंति यतोहि देवप्रकृतयः असुरप्रकृतयः चापि अनासक्त्या एव किंचिद्स्थायिनं आनन्दं प्राप्तुं अर्हन्ति नान्यथा। यद्यपि अधिकांशतः देवोपयुक्ताः अनासक्तिप्राप्तिविधयः अहिन्सकाः परं

अदेवोप्युक्ताः हिन्सकाः भवन्ति। अदेवाः मान्समदिरासंभोगादिपञ्चमकारैः,अन्यानेकहानिकरव्यसनैः षड्दोषाश्रयणात् च अनासक्तिं लभन्ते यद्यपि वैदिकशाक्ताः अपवादाः परं देवाः क्रीड़ाभ्रमणव्यवसायकलाविद्याज्ञानविज्ञानसत्कर्माद्यनेकाहिन्सकमानवीयगुणकर्मभिः, प्रेमसत्संगदर्शन- -धर्मादिदैवीयभावैः मानसिकषड्दोषनिवारणात् च अनासक्तिजन्यदीर्घस्थानन्दं लभन्ते। यद्यपि असुरपशुप्रकृतयः अत्यन्तानन्दं लब्धुं अर्हन्ति परं शाश्वतानन्दं केवलं देवप्रकृतयः एव प्राप्तुं स्मर्थाः हिन्सादिजनितात्मग्लान्यभावात्। एतत्तथ्यं अवगम्य कालान्तरे शाक्तप्रकृतयः अपि देवानेव अनुकुर्वन्ति प्रारंभादेव किंचिदपि अनासक्तिप्रभावात्।

अधिकांशपुरुषाः सर्वप्रथमतः स्थूलसंसारं ज्ञानेन्द्रियैः कर्मेन्द्रियैः च आसक्त्या गृह्णन्ति। ततः तेषु श्रमेण क्लान्तेषु अतः चित्तवृत्तिहीनेषु ते आसक्तिसंतानात्मान्धकारे निमज्जन्ति अतः किंचित् विश्रमन्ति। विश्रमोपरान्तं तद्देहेषु किंचिद्स्फूर्तमानेषु तेषु पुनः संकल्पाः प्रस्फुरन्ति येषु आसक्तिवञ्चकात् सतर्काः तत्प्रति अनासक्तिं अनुष्ठाति येन पुनः पूर्ववत् किंचिदात्मावलोकं भौतिकविकाससह प्राप्नुवन्ति येन मोहिताः पुनः आसक्तिं अनुष्ठान्ति तीव्रविकासार्थं यद्यपि तत्विकासः अशुभः अपूर्णः च यत्सार्धं पुनः आत्मानालोकः ततः पुनः पूर्ववत् बन्धनचक्रः। अनेन ते किंचिदालोकात् किंचिदनालोकमध्ये एव दोलायमानाः तिष्ठन्ति परमालोकात् वञ्चिताः युद्धस्तरेण अनासक्त्याचरणाभावात् । वास्तवेन ते किंचिदात्मालोकादेव संतुष्टाः अनासक्तिव्यवहारं मध्ये एव त्यजन्तः सन्ति किंचिदालोकादेव लौकिकव्यवहारसिद्धित्वात् यदेव मायामोहः आत्मानं हत्वा देहपोषणरूपः इति।

हास्यविनोदैः आनन्दमपि अनासक्तिजनकमेव तद्प्रतिसत्यत्वबुद्ध्यभावात्। वास्तवेन अद्वैतदृष्टिकोणसह किंचिदपि प्रयत्ने कृते न्यूनाधिकरूपेण परं पूर्णनिष्ठया गुणवत्तया च पर्वतारोहणवाहनाश्वनौकाचालनयुद्धादिसाहसिककर्मभिः तथा कलाविद्यापठनलेखनक्रीड़ादिकर्मभिः आत्मबन्धनविदारकानासक्तिः उदीयते। एतद्भिन्नैः द्वैतदृष्टिपरकपुरुषैः चित्तवृत्तयः आसक्तिसह एव अनुभूयन्ते येन केवलं क्षणिकानन्दम् आत्महननप्रतिकारेण। संसारे असुन्दरता केवलं अनासक्तिप्रदानार्थमेव निर्मिता। कर्माचरणस्य आसक्तिमयविधिः संक्रामकरोगवत् संपूर्णसमाजे वितनोति यद्समूलनाशः एतद्दर्शनेन एव संभवः।

यथा पुरुषसमाजाः अनेकविधाः अनेकस्तराः च तथैव देहपुरुषसमाजाः अपि। यथा पुरुषसमाजेषु परिवारः,ग्रामः,देशः पृथ्वी चादि समाजाः तथैव देहपुरुषसमाजेष्वपि यद्यपि भिन्ननामभिः। देहपुरुषमुक्तये अनासक्तिः न अनिवार्या यतोहि तेन कदापि आसक्तिः एव न कृता व्यक्ताव्यक्तसंकल्पाभावात् अतः सः सदामुक्तः। यतोहि पुरुषः देहपुरुषवत् संकल्पाभावेन् कर्माणि कर्तुं न अर्हति संकल्पकर्मणोः अन्योन्याश्रितत्वात् अतः तेन संकल्पप्रति अनासक्तिः एव एकमात्रमुक्तिकरोपायः। कथनान्तरेण यथा पुरुषेषु कर्मसु प्रवृत्तेषु तत्संकल्पाः प्रस्फुरन्ति तथैव देहपुरुषेष्वपि परं अनासक्त्या संकल्पाभावसंकल्पानासक्तिमध्ये अभिन्नतया परं केवलं पुरुषः एव व्यक्ताव्यक्तसंकल्पासक्त्या आत्मप्रकाशं जहाति। यतोहि व्यक्ताव्यक्तसंकल्पानासक्तिः व्यक्ताव्यक्तसंकल्पाभावरूपः एव अतः सिध्यति यत् अनासक्तपुरुषः देहपुरुषरूपः एव।

यथा सूक्ष्मपशवः स्वक्रमिकविकासेन देहपुरुषं अरचयत् यः स्ववर्धितवंशस्य कर्मविभाजनेन देहसमाजं अरचयत् तथैव स्थूलपशवः स्थूलपुरुषं यः ततः स्वसमाजं। यथा सूक्ष्मपशवः इन्द्रियन्यूनाः अतः देहसमाजनिर्माणाक्षमाः तथैव स्थूलपशवः अपि स्थूलसमाजनिर्माणाक्षमाः इन्द्रियन्यूनत्वात्। आश्चर्यं यत् देहसमाजे सर्वपुरुषाः पशवः चापि मुक्ताः परं स्थूलसमाजे केवलं विरलतमपुरुषाः एव,पशवः तु असंभवमुक्तयः। यतोहि देहपुरुषात्मनः देहपश्वात्मनः च चिदाकाशत्वं संकल्पविना एव स्वतः सिद्धं परं स्थूलपुरुषात्मचिदाकाशत्वाय तत्संकल्पानासक्तिः अत्यावश्यकी स्थूलपशुभिः यत् असंभवं अत्यल्पबुद्धित्वात्। देहपशवः तु देहहितार्थं केवलं इन्द्रियन्यूनाः एव भवन्ति कदापि न आत्मन्यूनाः तर्हि अद्यतनस्य निम्नश्रेणीकर्मकराः किमर्थं आत्मन्यूनाः भवन्ति। यतोहि स्थूलपुरुषसदृशचेतनः एव देहपुरुषवत् योजनाबद्धरूपेण चेतनाविकासार्थं कर्माणि कर्तुं अर्हति कदापि नैव जड़ः अतः देहपुरुषाः चिदाकाशरूपाः एव सिध्यन्ति संकल्पाभावात्।

नियमबद्धत्वेन अपि अनासक्तिः उदीयते नियमान्तर्गतकर्मणि आसक्तिजनकस्वार्थधारणाभावात्। एवमेव ज्योतिषनिर्दिष्टकर्मसंबन्धे लोकहितार्थकर्मसंबन्धे चापि अवगन्तव्यं। चिदाकाशलेखाचित्तवृत्तिः अचिदाकाशरूपा अन्धकारा वा न वा भवितुमर्हति आकाशपरिवर्तनासंभवात् परं चित्तवृत्तिशून्यान्धकारः अचिदाकाशः चिदाकाशरूपतां प्राप्तुमर्हति आकाशान्धकारमिथ्यात्वात्। अतः देहपुरुषवत् अद्वैतस्वरूपप्राप्त्यर्थं चित्तवृत्तिरहितात्मस्वच्छीकरणमेव एकमात्रोपायः यदेव तद्ध्यानसंभवानासक्त्या संभवं।

यथा देहदेशसीमा देहपुरुषन्यूना, संसाधनन्यूना दुर्गमा च तथैव स्थूलदेशसीमापि। यथा स्थूलदेशसीमानिकषा न्यूनाः धनजनबलाः तथा देशीयमध्यभागेषु प्रचुरमात्रायां तथैव देहदेशसंबन्धे अपि सत्यं। देहपुरुषैः कर्मविभाजनं पुरुषवदेव अनुष्ठीयते कर्मोत्कृष्टतार्थं संकल्पाप्लवजातरजोगुणनिवारणार्थं च रजोगुणस्य आत्ममोषकस्वभावात् कार्योत्कृष्टतान्यूनत्वाच्च। अनासक्तिधारणासह एव संकल्पाः मुक्तिकराः यद्यपि प्रारम्भे अनेन भौतिकपतनं दृश्यते अनासक्त्यनभ्यसनात् परं किंचिदभ्यस्ते तीव्रोन्नतिः दृश्यते अध्यात्मप्रगतिसह यद्यपि एतत्काले रजोगुणेन व्यवधानसंभावना अतः अतिसतर्कता वर्तनीया। ज्ञानरहितसंकल्पाः बन्धनसहमहादुखकारिणः यतोहि चित्तनियन्त्रकज्ञानवृत्त्यभावात् संकल्पाः अनियन्त्रितरूपेण प्रस्फुरन्ति येन अनावश्यकभौतिकविकासः अनेकपापकर्मसह उत्कर्षति यस्मात् तत्प्रभाविताः स्वहिताज्ञानिनः अज्ञानमहिमां गायन्ति।

शङ्कालुभिः अनेकदा वितण्ड्यते यत् देहपुरुषकर्मकारयितारः जैवरसायनादितद्देहोत्पन्नाः अनेकोत्तेजकपदार्थाः एव प्रेरकरूपाः आदेशकादेशरूपाः वा सन्ति, तत्र पुरुषदेहपुरुषयोः कथं समानता। ते एतत्तथ्यं ज्ञातुं अर्हन्ति यत् पुरुषाः त्वपि कस्यचिदेव प्रेरणया आदेशेन वा एव कर्माणि प्रारभन्ते। शब्दः अपि उत्तेजकवायुः एव यः श्रोतृन् कर्म कर्तुं प्रेरयति। एवमेव दृष्यमपि उत्प्रेरकप्रकाशः तथा मनोसंकल्पाः अपि उत्तेजकविद्युतरूपाः एव। यथा दैहिकसमस्याः देहपुरुषान् स्वापकर्तुं आवश्यकक्रियाकलापार्थं प्रेरयन्ति तथैव

स्थूलसमाजसमस्याः स्थूलपुरुषान्। यथा देहपुरुषाः समस्याभ्यः न विद्रवन्ति तथैव जीवन्मुक्तपुरुषाः अपि। देहपुरुषान् अद्वैतयुक्तक्रियाशीलता सर्वाधिकं रोचते आत्मवत् या नवजातेषु देहदेशेषु सर्वाधिकं दृश्यते अतः नवजातपुरुषाः शरीरविज्ञानदार्शिनिकस्य परमगुरवः।

ईश्वरसत्ताप्रमाणे सर्वव्यापिनाशहीनचिदाकाशविना सर्वत्रदृष्टचेतनाविकासः शाश्वतरूपेण संभवितुं न अर्हति चेतनानाशसंभावितसृष्टिनाशसंभावनात्। यथा सज्जनः जगति सज्जनतां कुटिलः च कुटिलताम् उन्नयति तथैव देहपुरुषचिदाकाश: सर्वत्र सदैव च निजस्फ़ुरणारूपजीवजगती। देहपुरुषसंचलनवत् पुरुषसंचलनार्थं अपि बद्धचिदाकाशात्मनः आवश्यकता नास्ति यद्यपि स्फ़ुरणमयानासक्तचिदाकाशात्मसत्ता अत्यावश्यकं। आनन्दकरस्वास्थ्यकरम् मध्यमवेगचित्तवृत्तिसमूहं देहपुरुषरूपिचिदाकाशप्रति ग्रामसिंहीप्रति तत्शिशुसमूहवत् धावनात् न वर्जयेम येन अद्वैतं उपजायेत् प्रतिक्षणमातृस्मरणात् यद्यपि अनियन्त्रितोत्तेजनाप्रदास्वास्थ्यकरचित्तवृत्तिसमूहं घटाकाशवत् मिथ्या एव मन्वन् सद्यः मूलचिदाकाशे विलयेम।

अल्पबुद्धयः मिथ्या एव मन्वन्ति यत् आत्मज्ञानावस्थायां कर्माणि न क्रियन्ते यतोहि देहपुरुषाः अपि सदैव आत्मज्ञानपूर्णाः तदापि ते पूर्णनिष्ठया कर्मठतमाः सन्ति। वास्तवेन रजोगुणेन केवलं पुरुषः एव बध्यते यतोहि सः आत्मस्फ़ुरणजातात्मबन्धननिवारणार्थं ज्ञानवृत्तिसह सात्विककर्माणि एव सोढुं शक्नोति परं देहपुरुषः आत्मस्फ़ुरणाः न अनुभवति अतः अतितीव्ररजोमयैः ज्ञानवृत्तिरहितकर्मभिः अपि न प्रभाव्यते। अज्ञानावृतपुरुषः एव कर्ता भवति द्वैतात यतोहि कर्मणि क्रियमाणे तदज्ञानभूताचिदाकाशात्मआनन्दकरस्वास्थ्यकरम् मध्यमवेगचित्तवृत्तिसमूहं देहपुरुषरूपीचिदाकाशप्रति ग्रामसिंहीप्रति तद्शिशुसमूहवत् धावनात् न वर्जयेम येन अद्वैतं उपजायेत् प्रतिक्षणमातृस्मरणात् यद्यपि अनियन्त्रितोत्तेजनाप्रदास्वास्थ्यकरचित्तवृत्तिसमूहं घटाकाशवत् मिथ्या एव मन्वन सद्यः मूलचिदाकाशे विलयेम। अल्पबुद्धयः मिथ्या एव मन्वन्ति यत् आत्मज्ञानावस्थायां कर्माणि न क्रियन्ते यतोहि देहपुरुषाः अपि सदैव आत्मज्ञानपूर्णाः तदापि ते पूर्णनिष्ठया कर्मठतमाः सन्ति। वास्तवेन रजोगुणेन केवलं पुरुषः एव बध्यते यतोहि सः आत्मस्फ़ुरणजातात्मबन्धननिवरणार्थं ज्ञानवृत्तिसह सात्विककर्माणि एव सोढुं शक्नोति परं देहपुरुषः आत्मस्फ़ुरणाः न अनुभवति अतः अतितीव्ररजोमयैः ज्ञानवृत्तिरहितकर्मभिः अपि न प्रभाव्यते । अज्ञानावृतपुरुषः एव कर्ता भवति द्वैतात्।

यदैव मनसि व्यर्थसंकल्पः उत्पद्येत तर्हि एव तं अद्वयात्मदेहपुरुषभावनात् शिथिलायेम। यदैव मनसि अवसादः अवत्रेत तर्ह्येव आत्मानं देहपुरुषवत् अद्वितीयशून्यमेव भावयेम। शून्यता अत्र भावाभावोभयराहित्यार्थे। न तेषु भवः कुतः अभावः। न तेषु उपसादः कुतः अवसादः। न तेषु हर्षः कुतः विषादः। न तेषु मनस्कता कुतः अमनस्कता। न ते कर्तारः कथम् अकर्तारः। देहपुरुषाः देहसमाजहितार्थम् समस्तावश्यकताः चक्ष्वादीन्द्रियैः अनुभवन्तः तत्पूर्त्यर्थं मनबुद्ध्याद्यन्तःकरणचतुष्टयसहयोगेन सर्वश्रेष्ठयोजनां निर्माय तदनुसारं पूर्णक्रियानिष्ठाः भवन्ति। कर्तव्यनिर्वहणे ते पुरुषेभ्यः अत्यधिक कुशलाः यतोहि तत्शक्तिः तद्व्यर्थसंकल्परूपेण न व्ययीभवति यां आत्मानन्दहीनाः आत्माज्ञानिपुरुषाः आनन्दार्थं उपयोजयन्ति। कर्तव्यपूरकसंकल्पान् ते केवलं ईश्वरस्य सृष्टिविकासेच्छाम् पूर्त्यर्थमेव धारयन्ति कदापि न देहजगहितरहितस्वहितार्थम् स्वानन्दार्थं वा सदापूर्णत्वात् अतः ते महानतमाः प्रभुभक्ताः अपि।

देहपुरुषाःपुरुषकृतानि सर्वकर्माणि कुर्वन्ति। ते वदन्ति, लिखन्ति, पठन्ति, चलन्ति, वर्धन्ते, क्रीड़न्ति, अभ्यसन्ति, स्मरन्ति, आदिशन्ति, अनुजानन्ति, संभुजन्ति, युध्यन्ति, स्पर्धन्ते, श्लिष्यन्ते, विश्लिष्यन्ते, अदन्ति, पिबन्ति, श्वसन्ति, मलोत्सर्जनं कुर्वन्ति, अटन्ति, रुग्णायन्ते, सज्जन्ते, मरन्ति, पुनर्जायन्ते, परिवर्तन्ते, संगठनं निर्मान्ति, आत्महननं कुर्वन्ति, एकान्ते वसन्ति, विद्रुह्यन्ति, स्वपन्ति योगं कुर्वन्ति च। देहपुरुषाः संगदोषेण अपि प्रभाव्यन्ते। तद्जीवनचर्या पुरुषसदृशा एवास्ति। एतत्सर्वकर्माणि तैः स्वात्मस्वरूपात् स्खलनं विना एव क्रियन्ते अर्थात् तैः एतेषु कर्माणि क्रियमाणेषु अपि ते पूर्णसच्चिदानन्दात्मस्वरूपे स्वदेहनैष्कर्म्यावस्थावत् एव अपरिवर्तन्तः तिष्ठन्ति। वास्तवेन देहपुरुषाः सदैव कर्मतत्पराः भूत्वा कर्मसहचरसंकल्पप्रत्यासक्तिनिवारणप्राप्तात्मबलेन निजात्मस्वरूपे एव अच्युतरूपाः तिष्ठन्ति। प्रकारान्तरेण कथिते देहपुरुषाः अनादिकालात् पूर्णात्मस्वरूपाः परं संकल्पाः आंशिकात्मरूपाः एव सन्ति अतः तेषु पूर्णतः भासमानेषु आंशिकात्मभासनरूपीसंकल्पानां सत्ता तथैव नास्ति यथा सूर्योदये दीपज्योतेः तथा सागरे पृथग्जलबिन्दोः अतः सिध्यति यत् देहपुरुषाः पूर्णभासमानसच्चिदानन्दघनात्मरूपाः एव सन्ति यतोहि आनन्दहीनेषु भूतेषु ते अवश्यमेव पुरुषवत् संकल्पसाधकस्वक्रियाकलापात् संकल्पानन्दं अगृहणिश्यन् येन देहजगत् अत्याधिकास्थिरः अभविष्यत् देहपुरुषैः संकल्पासक्तिसंभवाज्ञानजातस्वकर्मत्यागात्। पुनः कथिते, यद्यपि पुरुषवत् देहपुरुषे अपि देहनियन्त्रकाः बुद्धिमनादिप्रणाल्यः विद्यन्ते परं ते तत्पूर्णभासत्वात् तदांशिकभासनम् जनयितुं न अर्हन्ति चेत् एतत् तर्हि तदनासक्त्या निष्प्रभाविण्यः भवन्ति अर्थात् देहपुरुषे संकल्पहीनता विद्यते। पुरुषस्य चित्प्रकाशहीनत्वात् ईश्वरः तत्प्रति दयाप्रेरितः उपर्युक्तप्रणालीः स्वपूर्णचिद्प्रकाशसाहाय्येन तदांशिकावभासनार्थं आदिशति यदवलंब्य सः देहपुरुषवत् पूर्णचित्प्रकाशात्मस्वरूपं आप्नुयात्।

निमन्त्रेण विना यः समारोहं उपगच्छति सः अनासक्तिजन्यात्मानन्दं प्राप्नोति, एतदेव कारणं यत् महद्धार्मिकानुष्ठाने निमन्त्रणविना एव उपस्थीयते। अधिकभोजनोपरान्तं कर्माणि निस्संकल्परूपेण एव जायन्ते मनसः श्राम्येण क्लाम्येण च येन अनासक्तिः न उत्पद्यते अतः लघुभोजनाः एव श्रेयस्कराः। यतोहि आसक्तिः आत्मचेतनतां व्यास्मारयत् अतः अनासक्तिः पुनः पूर्णात्मचेतनतां स्मारयिष्यति अर्थात् देहपुरुषात्मस्वरूपं प्रापयिष्यति। एतदनासक्तिः देहपुरुषात् शिक्षितव्या। यतोहि देहपुरुषाः पूर्णानावृतात्मस्वरूपाः अतः तेषु आंशिकानावरणरूपीसंकल्पाः कथं विद्येयुः यतोहि यथा एकमूर्तिः एकसमानकाले पूर्णोद्घाटिता आंशिकोद्घाटिता च एकसार्धं स्थातुं न अर्हति। अतितीव्रगतिकर्मभिः अपि देहपुरुषचिन्तनाभावः अतः आसक्तिः येन आत्मजड़ता। न्यूनगत्यापि संकल्पन्यूनता संकल्पमन्दता वा येन संकल्पानासक्तिजातदेहपुरुषात्मज्ञानरूपीमुक्तिफलं न लभ्यते अतः आत्मजड़ता। अतः गतिसन्तुलनम् आवश्यकं अर्थात् अति सर्वत्र वर्ज्यते।

वास्तवेन चेत् प्रतिदिनं शयनकाले शरीरविज्ञानदर्शनं विचार्यते तर्हि पूर्णदिवसे तद्विचारावष्यकता एव न विद्यते तथा आत्मानन्दमपि कर्मप्रकारं कर्मगतिं च न अपेक्षते। एतत्स्मरणीयं यत् कर्म केवलं सत्कर्मार्थे। सर्वजीवशिशवः आनन्दमयाः अतः प्रियाः अनासक्तस्वभावात्।

अद्वैतसाधना द्विस्तरयुक्ता। प्रथमस्तरे सर्वानुभूतयः चिद्प्रकाशांशरूपाः यदेव प्रत्यक्षेण लघुविचारणया च सिद्धं। द्वितीयस्तरे सर्वानुभूत्यभावाः अपि चित्प्रकाशरूपाः चिदाकाशरूपाः वा यत्प्राप्तिः केवलं दृढ़धारणया सतताभ्यसनाच्च यतोहि प्रारम्भे अभावावस्था प्रकाशहीना अनुभूयते आत्मावरणत्वात् यत् सततात्मधारणया शनैः शनैः विधूयते अतः अप्रत्यक्षप्रमाणानि यथा आप्तवचनानि आश्रयणीयानि विश्वासजीवनार्थं यद्यपि किंचित्प्रकाशमानभूते आत्मा स्वयमेव प्रकाशपथि अग्रेसरति कुसंगव्यवधानम् अपक्रियते चेत्। देहपुरुषाः एतदोभयस्तराद्वैतसम्पन्नाः।

देहपुरुषवदनं संकेतनरूपं एव अस्ति। ते विभिन्नाकारप्रकारसंकेतैः परस्परं वदन्ति। यथा एकविषेशशब्दः एकविशेषकर्म कर्तुं प्रेरयति तथैव संकेतः अपि। अतः शब्दसंकेतयोः मध्ये अभिन्नता अस्ति समानप्रभावात्। उदाहरणतः उग्रदेहपुरुषैः त्रस्ताः सामान्यदेहपुरुषाः तान् मारयितुं सैनिकदेहपुरुषान् प्रति संकेतयन्ति। संकेतैः एव क्षुधार्तदेहपुरुषाः देहराजानं प्रार्थयन्ति यः अधिकारीपुरुषाणां उचितशृंखलया कृषकदेहपुरुषान् अन्नोत्पादनार्थं आदिशति। अत्र अन्नार्थं मुख्यादेशः एव राज्ञा दीयते, तत्संबन्धिन्यः सर्वव्यवस्थाः विभिन्नाधिकारीसमूहेन स्वयमेव निर्मीयन्ते, यत्प्रणाली स्थूलदेशे अपि परिदृश्यते। एतद्विचित्रं यत् देहदेशराजा स्वकर्माणि न अनुभवति पूर्णत्वात् परं पुरुषः तत्कर्माणि अनुभवति यत्प्रत्यासक्त्या एव सः निबध्यते। एतत्प्रत्यक्षं यत् पुरुषः तदनुभवनं निवारयितुं न समर्थः परं सः आसक्तिं निवारयितुं तु पूर्णसमर्थः। ततः वाहकदेहपुरुषाः तदन्नं सर्वदेहपुरुषार्थं संपूर्णदेहे वहन्ति।

अधुना तत्लेखनं कथ्यते। देहदेशसैनिकानां एकविशेषश्रेणी एकविशेषमसिं प्रयुज्य एकप्रार्थनापत्रं आक्रान्तृशत्रूपरि चातुर्येण श्लेष्यति यत् पठित्वा मारणप्रशिक्षिता एकान्यविशिष्टसैनिकश्रेणी तान् संलग्नपत्रोग्रवादिनः मारयति। वाहकदेहपुरुषाः सैनिकदेहपुरुषाः च सर्वाधिकभ्रमणशीलाः सन्ति तत्संबन्धितस्थूलपुरुषवत् तत्तीव्रकर्मप्रकृत्यनुसारमेव। अत्रोपरान्तं पुरुषः, समाजः देशादिशब्दाः च देहसंबन्धे वर्णनानुसारं वा एव। सैनिकपुरुषाः संपूर्णदेशं बाह्यशत्रुभ्यः देशद्रोहिभ्यः च रक्षितुं मोक्तुं च सर्वत्रैव सततं च विचरन्तः भवन्ति। तेषां अल्पापि असावधानता समग्रदेशं व्यापादितुं समर्था। अतः तेषां स्वस्थदेहसतर्केन्द्रियातितीव्रमनकुशाग्रबुद्ध्याद्यनेकपरस्परसहकारीकारणचालितान्तरङ्गकार्यप्रणाल्यः अतिजटिलाः अन्योन्याश्रिताः च। परिष्कर्तृपुरुषाः निर्मातृपुरुषाः चापि दुर्घटनास्थानम् अनेककर्मकरैः सह शीघ्रतया धावन्तः उपगच्छन्ति।

एतत् न विस्मर्तव्यं यत् देहपुरुषैः उपरोक्तसर्वकर्माणि चिदाकाशाद्वैतेन अर्थात् अनासक्तिसह स्फुरणयुक्तचिदाकाशस्वरूपतया एव क्रियन्ते। ईशसंनिधिः एव ईश्वरभक्तिः। ब्रह्मसारूप्यं एव तत्परमसामीप्यं अर्थात् परमभक्तिः यत् देहपुरुषेण आचर्यते। ज्ञानमेव ब्रह्मसामीप्यं तथा ब्रह्मसारूप्यमेव परमज्ञानं यदपि देहपुरुषस्वरूपं। ब्रह्मस्वरूपे पूर्णतया तिष्ठन् परमकर्मठता एव परमकर्मयोगरूपा यदपि देहपुरुषैः प्रदर्श्यते।

यद्यत् सूक्ष्मपुरुषः करोति आचरति वा यदवस्थाः च सः धारयति तत्तदेव स्थूलपुरुषः अपि,तर्हि आत्मानं केवलं स्थूलपुरुषः एव किमर्थं कर्ता भोक्ता च मन्येत। देहपुरुषाः पुरुषवदेव वर्धन्ते। तद्नवजाताः तीव्रतमवेगेन वर्धन्ते। तदाहारावष्यकता अत्याधिका परं विपरीततया उदराकारः अतिलघुः अतएव ते बाह्यसामाजिककर्माणि स्वपितरादिवयोवृद्धवत् न कुर्वन्तः केवलं अनवरतवेगेन स्वबृहदाहारं अल्पभागेषु विभाज्य दिवसे अनेकधा अश्नन्तः तिष्ठन्ति। तेषां पुनः-पुनः कर्मचेष्टा यद्यपि अप्रभाविरूपेण एव तत्क्रीड़ा उच्यते। व्यस्कपुरुषाः तान् अत्यच्छविधिना पालयन्ति। ते समस्तसुखसुविधासंपन्नेषु अन्नजलपूर्णोग्रवादीशत्रुमुक्तान्तःपुरेषु बाह्यक्लेशप्रदवातावरणात् दूरे महद्सैनिकसुरक्षया सह च सर्वपुरुषैः पूर्णस्नेहभावेन लाल्यन्ते पाल्यन्ते च। व्यस्कदेहपुरुषाः सामाजिकोत्तरदायित्वकर्मक्लिष्टाः तथा भोजनप्रति न तादृशोत्सुकाः यतोहि ते खादितान्नोपयोगः स्वदेहक्षतिपूर्त्यर्थं कर्मशक्तिप्राप्त्यर्थं चैव कुर्वन्ति स्वदेहस्य पूर्णवृद्धित्वात्। देहपुरुषसोढक्षतयः पुरुषवदेव विभिन्नान्गानां दौर्बल्यं, भन्जनं शैथिल्यमादि च सन्ति। खादितान्नेन तैः स्वसमस्तजीवनप्रणाल्यः चाल्यन्ते यथा श्वसनं, वदनं, लेखनं, चलनं पठनं आदि च।

प्रेम्णा अनासक्तिः उदीयते प्रेमीप्रतिनिरन्तरध्यानप्रभावात्। एवमेव निद्राबाधनेन अपि अनासक्तिः उदीयते मस्तिष्कशैथिल्यात् संकल्पानां गहनान्वेशणाभावात। एषा विडम्बना यत् तथाकथिताधुनिकजनाः केवलं भौतिकविकासमेव श्रयन्ते तथा ते आत्मविकासं अवमन्यते तथाकथितक्लेशाधिक्यात् यद्यपि ते स्वचालितमनरहितानावृतात्मरूपयन्त्राणां प्राकृतिकघटनानां च अध्ययनं परिचालनं च कुर्वन्ति परं तदात्मचिन्तनविना एव अतः ते मनसा निबद्धीभूय एव आचरन्ति। देहपुरुषे चेतनब्रह्मभावना परमसुकरा चेतनपुरुषजीवसह तत्परमसादृश्यात् तस्मिन् च प्रकृतिवत् ब्रह्मवत् वा मनोऽभावात अतः तस्य शुद्धचिदाकाशत्वात्। देहसह देहसमाजे ब्रह्मभावनायां कृतायां जीवसहसर्वजीवसमाजेषु ततः संपूर्णसृष्टौ स्वयमेव ब्रह्मभावना उदेति सर्वमध्ये पूर्णसादृश्यात् "यत्पिण्डे तत्ब्रम्हान्डे" एतदुक्त्यनुसारं। यथा शरीरे तत्संपूर्णपदार्थाः घटनाः च परस्परं संबद्धाः तथैव संपूर्णसृष्टौ अपि उपरोक्तमहोक्त्यनुसारमेव। अतः एकजीवतापेन अपि संपूर्णसृष्टिः तप्यते यथा एकाङ्गतापेन एकसूक्ष्मपुरुषतापेन वा संपूर्णदेहः। इच्छाविना पूर्णनिष्ठया कर्मणा अनासक्तिः उदेति।

चेत् देहपुरुषस्य अद्वैतमयकर्मठतादिसर्वगुणाः विचिन्त्यन्ते तर्हि स्वतः एव तदनुकरणम् जायते उभयपुरुषमध्यपूर्णसादृश्यात् यतोहि प्रत्येकजीवः स्वसदृशमेव अनुकरोति समस्वभावोत्पन्नमित्रतया। यदापि क्रोधः प्रभवेत् तदैव क्रोधहीनपुरुषान् स्मरेत्। यत्क्षणं एव कामः

उत्तिष्ठेत् तत्क्षणं एव तत्कामहीनान् स्मरेत्। यदा लोभः प्रस्फुरणं आरभेत् तदा लोभहीनसूक्ष्मपुरुषाः भावनीयाः। यत्कालं मोहः अस्मदुत्पीडनं आरभेत् तत्कालमेव मोहरहितदेहपुरुषान् विचिन्त्य आत्मतुष्टिम् लभेम। यदवसरे मदः गर्जयेत् तदवसरे स्वसदृशसूक्ष्मपुरुषाणां मदराहित्यं अनुभवेम। यथा तज्जीवनं निःमात्सर्यकं तथैव अस्माकमपि भवेत्। यदा-कदा स्वजीवने नैष्कर्म्यं प्रभवेत् तदैव वयं देहपुरुषाणां अतिकर्मठतां ध्यात्वा निश्चिन्तयेम। मनसि दोलायमानावसरे तस्य निश्चलमनःस्थितिं भावयेम। कर्तव्यच्युतौ संभाविते तत्सूक्ष्मपुरुषाणां प्रगाढ़कर्तव्यनिष्ठां विलोकयन् कर्तव्यनिष्ठाः भवेम। यदा अवसादः प्रभवेत् तदैव तद्विरवसादपुरुषप्रति धावेम। यदैव सच्चिदानन्दहीनता प्रतीयेत तदैव पूर्णसच्चिदानन्दकर्मठदेहपुरुषं अनुवर्तेम। स्वजीवने यदा-कदा अपि किंचिदपि प्रति आसक्तिः उद्भूयेत् तदैव अनासक्तमहामानवदेहपुरुषगुरुणा शिक्षेम। यदा कश्चित् पुरुषः सूक्ष्मपुरुषाचरणविपरीतानि अमानवीयानि आसक्तियुतानि वा कर्माणि करोति तदा सूक्ष्मपुरुषब्रह्म तं स्वविरुद्धं मत्वा प्रतिकूलपुरुषस्यदुर्लभस्मरणमिलनवत् किंचिदपि न स्मरति यत्प्रभावतः युध्यति नश्यति च।

देहपुरुषाः सदैव पूर्णानन्दरूपाः मनरहिताः च अतः सदैव तनावराहित्येण पूर्णसामन्जस्ययुक्तसामूहिकतया क्रियाशीलाः अर्थात् क्रीड़ारताः। या सामञ्जस्ययुक्तसामूहिकता पुरुषैः अपारचिद्स्फुरणाभिः तत्प्रति आसक्त्या चापि न प्राप्यते सा देहपुरुषैः केवलं स्वचिदाकाशात्मशक्त्या आसक्तिरहितचित्स्फुरणाभिः वा एव अर्थात् मुक्तत्वेन प्राप्यते। तत्सूक्ष्मलोकस्य शासकाधिकारिणां मध्ये अपि अति सामञ्जस्यं विद्यते। ते संपूर्णदेशस्य कल्याणार्थं सर्वान् पुरुषान् आदिशन्ति। तदादेशं सर्वपुरुषाः पूर्णरीत्या अनुपालयन्ति यद्यपि किंचित् निरर्थकं नैवापि। स्थूललोके अपि एवमेव दृश्यते।

सूक्ष्मपुरुषामनस्कता एव सर्वश्रेष्ठा अतः प्राप्तव्या। अमनस्कता अत्र अद्वैतमयाः मनसः भावाः अभावाः च अर्थात् शाश्वतात्मभावरूपा एव अस्ति। आत्माभावरूपीमनोनाशः अर्थात् द्वैतेन मनोऽभावः केवलं मनोभावानुसारात्मावरणरूपी मनोसंकुचनरूपी एव अस्ति यदेव पुनर्जन्यपरलोकगामीसूक्ष्मशरीरनाम्ना,लिङ्गशरीरनाम्ना कारणशरीरनाम्ना चापि अभिधीयते यः नवीनस्थूलदेहं उपयुज्य स्वगुप्तभावं पुनः स्थूलरूपेण उद्घाटयति।

स्थूलपुरुषवत् सूक्ष्मपुरुषाभ्यसनं स्वकर्मणि दक्षताप्राप्त्यर्थमेव। यदा अल्पबलवन्तः तथा देहसमाजहानिकरणार्थं अल्पक्षमाः अक्षमाः वा देहासमाजबहिस्थाः उग्रवादिनः सूक्ष्मपुरुषाः देहदेशे प्रविशन्ति तदा सैनिकदेहपुरुषाः तन्मारणाभ्यासं अर्थात् युद्धाभ्यासं कुर्वन्ति येन तैः भविष्ये महद्बलवानशत्रवः अंजसा एव हन्यन्ते। सूक्ष्मपुरुषः अत्र देहपुरुषपर्यायवाची शब्दः एव, तस्य अतिसूक्ष्मतया यन्त्रदृश्यत्वात् च। एवमेव सूक्ष्मसमाजः अपि देहसमाजपर्यायवाची एव।

वृत्तिरहितात्मनि चित्तवृत्तिस्वरूपा स्वच्छचेतनता चिदाकाशरूपा एव अस्ति। एतत्स्वच्छशून्यता सूक्ष्मसमाजभावनेन अंजसा एव अनुभूयते यां प्रगाढ़ितुं पुरुषः स्वयमेव अध्यात्मशास्त्राणि अनुगच्छति येन शेषा आत्मन्यूनता अपि पूर्यते। अनेन आत्मानुभवनार्थं चित्तवृत्तिमहत्त्वं स्वतःसिद्धं। आत्मोपरि चित्तवृत्तेः आरोपणं अर्थात् ज्ञानयोगः अपि च चित्तप्रति अनासक्तिः एकसमानफलप्रदम्। बौद्धानां मध्यमार्गः अपि अनासक्तिमार्गस्य कर्मयोगस्य वा एकप्रकारान्तररूपः। एवमेव संभवतः पूर्वमपि उक्तं यत् कलाक्रीड़ातांत्रिकव्यसनसत्कर्महीनपुरुषैः चित्तवृत्तयः केवलं आसक्त्या एव अनुभूयन्ते येन केवलं क्षणिकानन्दं परं अन्ततः आत्ममान्द्यमेव।

सूक्ष्मपुरुषक्रीड़ा पूर्णतया स्थूलपुरुषक्रीड़ावत् एव अस्ति बाह्यदृष्ट्या परं तेषु सर्वभावेषु विद्यमानेषु अपि किंचिदपि षड्दोषाः न विद्यन्ते अनासक्त्या अर्थात् सा क्रीड़ा निष्कामा, अक्रोधा, निर्लोभा, निर्मोहा, निर्मदा, निर्मत्सरा चास्ति। सर्वपुरुषैः परस्परं पूर्णसामञ्जस्येन तत्क्रीड़ायां मानवतार्थं हस्तपादविन्यासं शरीरांगसंचालनं च क्रियेते अनासक्त्यभ्यासात्। वास्तवेन तत्सर्वकर्माणि क्रीड़ारूपाणि एव सन्ति अनासक्त्या अतः तेषां आनन्दरूपाणां चिदाकाशात्मनां शाश्वतरूपेण पूर्णभावात्।

सूक्ष्मपुरुषशरीरे अपि पुरुषवत् विभिन्नाङ्गानि विद्यन्ते ये तन्मस्तिष्केन नियन्त्र्यन्ते। तदभ्यन्तरे तद्देहसमाजे अपि बहवः देहपुरुषान्तरपुरुषाः वसन्ति यन्मध्ये किंचित्शरणार्थिनः उग्रपन्थिभिः पलायिताः अपि आश्रयन्ते ये विनिमये अग्निकुण्डसंचालनादिप्रचण्डकर्माणि कुर्वन्ति। एते सर्वे देहपुरुषान्तराः पुरुषाः अपि देहपुरुषवत् एव ईश्वरवाँछितायै मानवतायै समस्याप्रदर्षितायाः आवष्यकतायाः अनुसारं एव अद्वैतेन जटिलान् यन्त्रमयान् उद्योगान् चालयन्तः सदैव परमतुष्टाः तिष्ठन्ति। देहपुरुषान्तरपुरुषाणां देहे एकान्यः जनसमाजः विद्यते यस्य जनाः अपि देहपुरुषवदेव स्वाधिष्ठातृदेहप्रीत्यर्थं अतः अन्ततोगत्वा मानवताविवृद्धये चक्षुमनादिज्ञानेन्द्रियैः अनुभूतानां समस्यानां निवारणरूपायाः आवश्यकतायाः पूर्त्यर्थं मनबुद्धिनिर्दिष्टं हस्तपादादिकर्मेन्द्रियचालनं कुर्वन्तः अनासक्त्या अच्युतात्मरूपाः तिष्ठन्तः सर्वकर्माणि कुर्वन्ति।

यः चिदाकाशः सर्वोदरीकर्ता विशालतमदेहः, सः एव सर्वाधःस्थितः परमोदरीकृतदेहः अपि। सर्वपुरुषेषु स्थूलपुरुषः एव अनेकरूपः, आसक्तः, अपूर्णः चिदाकाशांशरूपः च। अन्याः सर्वपुरुषाः तु अद्वयरूपाः, अनासक्ताः, पूर्णाः चिदाकाशरूपाः च। सर्वेषु पुरुषेषु अपि निकटतमः देहपुरुषः एव सर्वश्रेष्ठः अस्ति उभयगुणयोः चर्मोत्कर्षात् अर्थात् देहसंरचनायां स्थूलपुरुषसादृश्यात् आत्ममुक्तत्वे च अन्यसर्वपुरुषसादृश्यात्। स्थूलतमः देहः निर्विकारः चिदाकाशात्मा। तदन्तरे ब्रह्माण्डरूपिणः असंख्याः देहपुरुषाः भ्रमन्तःतिष्ठन्ति। पुनः अपि ब्रह्माण्डदेहे आकाशगंगानामाः असन्ख्यदेहपुरुषाः जीवन्ति ये यथानियमं स्वाधिष्ठातारं सेवन्ते।

यद्यपि लोकपरलोकोभयसिद्धये देहपुरुषाः सदैव भावनीयाः परं यदा कामक्रोधादिमनोदोषप्रभवकाले अहंकारहीनात्मस्थितिः अत्यावश्यका तदा स्थूलपुरुषात् अन्यपुरुषाः विशेषतया देहपुरुषाः अवश्यमेव भावनीयाः। अद्वैतं प्रकाशमयात्मना सह एव संभवं,

कदापि न अन्धकारात्मना सह, चित्तवृत्तीनां प्रकाशस्वरूपात्, अतः तत्चेतनप्रकाशः आत्मनि आरोपणीयः सततं अद्वैताभ्यासात् देहपुरुषभावनात्।

सौरमण्डलदेहे ग्रहादितद्देहपुरुषाः वर्तन्ते ये सदैव सूर्यरूपीहृदयस्य मस्तिष्कस्य वा प्रदक्षिणां आज्ञापालनं वा कुर्वन्ति, स्वकर्मत्यागात् बलवानपुरुषेण सूर्यदेहेन सर्वनाशभयात् गुरुत्वाकर्षणात् वा दूरे गते चापि सूर्यरूपीप्रेरकादेशकाभावात् ततः जीवपालनरूपीसत्कर्मत्यागजातनाशभयात्।

अधुना पृथ्वीदेहः कथ्यते। नद्यः अस्याः रक्तवाहिन्यः यः तद्देहविवृध्यर्थं समस्तानि पोषकतत्वानि आनयन्ति तदोत्सृष्टान् च अपशिष्टान् अपनयन्ति देहपशूपयोगार्थं ये निजार्थं परार्थं च समस्तानि पोषकतत्वानि अर्थात् अन्नानि संश्लेषयन्ति। अस्याः गन्धादिसंदेशवाहकगुणाः स्नायुतन्त्ररूपाः, सर्वजीवाः देहपुरुषरूपाः, पर्वतादिभूमयः अस्थिरूपाः, मृदा आमिषरूपा वृक्षादिसह जीवाणवः च देहपुरुषान्तरवासितरासायनिकोद्योगरूपसाधारणजीवसमतुल्याः सन्ति। वायुस्पन्दनम् अस्याः श्वासरूपं येन अस्याः देहपुरुषरूपाः मनुष्याः श्वसन्ति। सूर्याग्निभ्यां देहपुरुषक्रियाकलापेभ्यः च तापग्रहणं अस्य स्वस्थदैहिकतापमानं एकसमानताया स्थापयति येन अस्य देहपुरुषाः स्फूर्तिमानाः देहसमाजकर्माणि पूर्णदक्षतया कुर्वन्ति। अद्य विभिन्नप्रदूषणैः संक्रमितः भूदेहः अनेककृत्रिमविधीन् आश्रयतां देहपुरुषाणां अत्यधिकया क्रियाशीलतया उत्तरोत्तरम् वर्धमानज्वरं प्रति अग्रेसरति येन शीघ्रमेव भूजीवनं दूभरं भविष्यति चेत् समुचितोपचारं न अनुष्ठीयेत। कदाचित् उच्चदेहतापमानं असामाजिकानां देहशत्रूणां नाशाय आवश्यकं मूढैः, आक्रान्तृभिः जनजातीयैः च शत्रुभिः सह तापप्रतिकारार्थं आवश्यकसंसाधनाभावात् परं निरन्तरज्वरः हानिकरः। अस्याः सिंहादिरक्षकपुरुषाः श्वेतरक्तकणनामकैः मनुष्यदेहसैनिकपुरुषैः तदर्बुदकोशिकाजीवाणुनामकयोः शत्रुदेहपुरुषयोः मारणवत् पापपूर्णोत्पथगामीकर्महीनानियन्त्रितान् पृथ्वीभारान् जीवान् हत्वा पृथ्वीदेहं रक्षन्ति। यथा स्थूलदेहस्य स्वास्थ्ये स्वतःभूतं वैद्यकृतं वा वातपित्तकफ़संतुलनं तत्शोधनं च मूलकारणं तथैव पृथ्वीदेहे अपि अग्निवायुजलादिमूलतत्वसंतुलनं एतद्विकृतिचिकित्सकाः च समाजसुधारकाः।

देहपुरुषसभायां कृषकाः जलाभावं वर्णयन्ति यैः सह अन्यदेहपुरुषाः अपि जलाभावसंजातां शक्तिहीनताम् पाचननिष्कासनश्वसनपरिवहनादिसर्वकार्यप्रणालीषु च बाधाः अवर्णयन् याः सर्वपुरुषाः अन्वमोदयन्। तदा अध्यक्षेण आदिष्टाः देहजलसंतुलनकरविभागजनाः यथाशक्तिः देहजलसंरक्षणार्थं शीघ्रकरिष्यमाणस्य स्वप्रयासस्य संबन्धे सभां व्याश्वासयन। देहशासकादिष्टाः पर्यावरणविभागपुरुषाः अपि देहदेशे भूदेहजलप्रवेशनार्थं भूमौ समुद्रजलप्रवेशनार्थनिर्मितपरिस्थितिसदृशाः परिस्थितयः निर्मान्ति येन वृष्ट्युपरान्तं सिञ्चनजनस्वास्थ्यविभागनिर्मितेषु नालिकाकुण्डेषु पर्याप्तजलं प्रवाहितं भवति, अतः सर्वपुरुषाः जलाप्लुताः तुष्टाः च भवन्ति। वास्तवेन देहपुरुषाः सदैव प्रसन्नाः अभावेष्वपि भावेष्वपि च अनासक्त्या आत्मसच्चिदानन्दजीवनशक्तेः अक्षुण्णत्वात् अतएव ते केवलं सुखार्थं एव कदापि आत्मचेतनाविकासरूपीमानवताविरुद्धं न आचरन्ति। एवमेव देहपुरुषाः अस्मान् जीवनयापनस्य कल्याणकरविधिं शिक्षयन्ति। कदाचित् अतिवृष्टौ जलविभागपुरुषाः पूर्णदक्षतया अतिरिक्तजलं देहक्षेत्रात् बहिः निष्कासयन्ति येन तत्पुरुषाः रक्ष्यन्ते। एवमेव अनावृष्टौ अपि नदीनदजलं शोधनोपरान्तं यन्त्रादिभिः शक्त्या देहक्षेत्रोपयोगार्थं पुनः आरोह्यते।

शरीरविज्ञानदर्शनसाधकाः अधिककार्यक्षमाः दक्षाः च भवन्ति आत्मचेतनशक्तेः चित्तवृत्तिरूपेण अनिर्गमनत्वात् निरर्थकचित्तवृत्तिभिः वापि आत्मचेतनशक्तेः ग्रहणत्वात्। यथा देहसमाजस्य प्रत्येकक्रिया अवस्था च ईश्वरेच्छया तथैव स्थूलसमाजस्य अपि। देहपुरुषाणां स्मरणवृत्तिः मानवीयकर्मणां पुनः-पुनः क्रियान्वयनार्थं यद्यपि अनासक्त्या। कर्मविधिस्मरणेन एव देहपुरुषाः आवश्यकतानुसारं पुनः-पुनः विभिन्नान उत्पादान पूर्ववत् उत्पादयन्ति विभिन्नकर्माणि कुर्वन्ति च। एका सैनिकश्रेणी तीव्रस्मरणशक्तिसंपन्ना अस्ति यस्य सैनिकाः प्रागाक्रान्तृशत्रून् तन्मारणविधिं च जीवनपर्यन्तं स्मृत्वा देहदेशं सततं रक्षन्ति।

देहदेशे शासनपरम्परा अत्युत्तमा। तत्र प्रत्येकविभागोपरि एकः विभागाध्यक्षपुरुषसमूहः विद्यते। वातानुकूलितकक्षस्थाः यातायातविभागाध्यक्षपुरुषाः ऊर्जाचालितान् वाहकयन्त्रान् चालयितुं नियन्त्रिकर्तुं च यन्त्रचालकदेहपुरुषान् आदिशन्ति। यन्त्रदोषे अभियन्तापुरुषाः शीघ्रतया एव तत्र उपसरन्ति तद्दोषान च निराकुर्वन्ति। देहदेशे एतद्विधकार्यकर्तासमूहनिर्माणं एकपुरुषेण उच्छृंखलाचरणनिवारणार्थम् लोकतंत्रार्थम् वा कर्मणि गुरुत्वप्रदानार्थम् चैव। स्थानीयजनतासहयोगेन सः समूहः एव यात्रामार्गान् आवश्यकतायां तानयति विशेषतः यदा कश्चित् देहदेशभागे अन्नवस्त्रादिपदार्थानां पुरुषाणां च प्रचुरतया उपलब्ध्यर्थं प्रेषितं याचनापत्रं तेन प्राप्यते विशेषतः युद्धकाले, उग्रवादे, विद्रोहे ,यन्त्राद्यन्तःसंरचनाविकासकाले उद्योगभवनादिबाह्यसंरचनाविकासकाले च।

देहदेशस्य नीतिनिर्मातारः नीतिनियन्तारः च देहपुरुषसमूहाः पृथक्-पृथक् वातानुकूलितेषु, स्वच्छेषु विविधसंसाधनसंपन्नेषु च प्रकोष्ठेषु वातावरणीयपारिवारिकविघ्नहीनतया शान्त्या च वसन्ति। वास्तवेन देहपुरुषाः सदैव अद्वयचिदाकाशरूपाः अनासक्तिप्रभावात् अतः परमशान्ताः आत्मना, शान्तिः उपर्युक्ते केवलं देहमस्तिष्कयोः।

भूदेशस्य वाहकलौहशृङ्खलावत् देहदेशे अपि यन्त्रशक्तिचालिता एकविशेषप्रकारा रक्तवर्णा द्रव्यशृङ्खला विद्यते यस्यां मन्दीभूतायां संकीर्णपथायां च तदोपरि परिवाहिताः देहदेशनिर्मातारः तानि तत्त्वानि स्वचालितरूपेण बहिः निर्गच्छन्ति अपि च बाह्यानि वस्तूनि वस्तुबहुलेभ्यः क्षेत्रेभ्यः अन्तःप्रविशन्ति। आवश्यकतायां तत्शृङ्खलास्थाः सैनिकाः अपि बाह्यक्षेत्रान् प्रति कूर्दन्ति लक्ष्यप्राप्त्युपरान्तं च अन्यमार्गैः राजमार्गेषु प्रविशन्ति।

देहदेशे एकः पृथक् ऊर्जाविभागः अपि विद्यते यस्य शक्तिगृहाणि, नियामकयन्त्राः कर्मचारिणः च संपूर्णदेशे प्रचुरतया व्याप्ताः। भूदेशात् ईन्धनं प्राप्य देहदेशस्य असंख्याः अग्निकुण्डाः स्थूलदेशस्य तापविदयुतयन्त्रसदृशया प्रणाल्या नियन्त्रिताः अहर्निशं प्रज्वलन्ति

यदूष्मया देहदेशस्य संपूर्णक्रियाकलापः निर्विघ्नतया चलायमानः। आवश्यकताधिका ऊर्जा ऊर्जाभण्डारणयन्त्रे एकीकृता भविष्यप्रयोगार्थं। वास्तवेन देहसमाजस्य सर्वाः क्रियाः स्वभण्डारीकृतया स्वच्छया ऊर्जया एव निष्पाद्यन्ते, न प्रत्यक्षया। स्थूलसमाजे अपि भण्डारीकृता ऊर्जा एव प्रमुखतया उपयुज्यते परं सा कोटिसहस्त्रवर्षपूर्वनिर्मिता अस्वच्छा च। ते सीमितमात्रायां स्वप्रयासेण अपि ऊर्जां उत्पादयन्ति या स्वच्छा अतः पर्यावरणहितकरा यद्यपि अभन्डारणीया अतिसीमितमात्रायां भन्डारणीया वा। एवं प्रगत्यर्थं स्थूलसमाजेन सूक्ष्मसमाजात् शिक्षितव्या।

सर्वदेहपुरुषाः स्वप्रति सर्वादेशान् पूर्णरीत्या सदैव तावत् पालयन्ति यावत् ते विद्रोहिणः न भवन्ति अध्यक्षेण वा देहहानिकराः आदेशाः न दीयन्ते। कदाचित् बुद्धिभ्रमात् तैः सर्वाहितकरादेशाः अपि पाल्यन्ते। कृषिपशुपालनविभागयोः प्रबन्धनिदेशकसमूहः अन्नाभावात् देहपुरुषेषु कृशेषु जातेषु देहदेशे वृद्धिविकासरोगयुद्धादिकालेषु च देहकृषकान् प्रचुरान्नोत्पादनार्थं आदिशति। अपि च अन्यपदार्थान् हित्वा विदेशेभ्यः खाद्यान्नं एव प्रचुरमात्रायां उच्चमूल्यमपि आयातितं क्रियते यदर्थं आयातशुल्कम् अपि न्यूनीक्रियते।

देहदेशस्य महाराज्ञः कार्यं केवलं विशेषपरिस्थितीनां अनुभवनमेव अस्ति यथा बाह्यकर्मफलसंबन्धे, देहदेशस्य आयातनिर्यातसंबन्धे, विदेशनीतिसंबन्धे स्वपतनविकाससंबन्धे च। महाराज्ञः विकासं अनासक्त्या शुभकर्मभिः च जायते। एवमेव तस्य पतनं आसक्त्या अशुभकर्मभिः च जायते। तस्य कार्यं केवलं स्वप्रजासेवकादिभिः सहायतया विदेशेभ्यः सेवावस्तुप्रदानं विनिमये च तेभ्यः स्वदेशार्थं सेवावस्तुप्रापणम् एव अस्ति। विदेशेभ्यः आयातितानि साधारणवस्तूनि देहदेशेन विकास्यन्ते स्वपरिचालनार्थं च उपयुज्यन्ते। देहदेशस्य आन्तरिकाणि कार्याणि तु मन्त्रिभिः अधिकारिभिः च स्वतः एव क्रियन्ते, महाराजा तु केवलं तत्कर्मवेगं वर्धितुम् एव समर्थः प्रेमोपदेशेन, स्वकर्मप्रेरणया दण्डेन च। देहदेशे केवलं महाराजा एव बन्धनं आप्नोति देहदेशपरिस्थितीन् आत्मनि अनुभूय आसक्त्या। अन्ये सर्वे देहपुरुषाः सदामुक्ताः।

यदा विशेषाधिकारी देहपुरुषसमूहः देहसमाजे अन्नबाहुल्यं पश्यति तदा सः भण्डारीपुरुषेभ्यः प्रेम्णा तदतिरिक्तान्नभण्डारणार्थं आदिशति येन अतिवृष्ट्यनावृष्टिरोगादिविकटासु परिस्थितिषु कालं सुखेन याप्येत। यदा देहसंसारे शीतर्तुः आगच्छति तदैव कश्चित् शासकदलः शीतग्राहीपुरुषसंदेशेन शीतं अनुभूय ऊर्जाविभागं तत्समाधानहेतु आदिशति येन सर्वदेहपुरुषाः तापकयन्त्रेषु प्रज्ज्वालितेषु रक्ष्यन्ते।

देहपुरुषेषु जन्म मनोभावः वा केवलं चिदाकाशस्फुरणरूपः एव, नैव कस्यचित् उत्पत्तिः अनासक्तिप्रभावात्। एवमेव मनसः अभावः मृत्युः वा अपि केवलं आत्मस्फुरणशमनरूपः एव,नैव आत्माभावः। पुरुषवत् प्रत्येकदेहपुरुषः अपि सर्वकार्याणि कर्तुं समर्थः परं एककर्मणि एव विशेषज्ञतां अर्जति कार्यदक्षतार्थं। तैः विशेषज्ञता आवश्यकतास्थानसमयानुसारं स्वयमेव प्राप्यते उच्चतरसत्तालोभात् पुरुषवदेव। पुरुषवत् देहपुरुषस्य अपि प्रत्येकबाह्यभावः तत्चित्तवृत्तिरूपात्मभावसह एव विद्यते परं अनासक्तिप्रभावात् सः लेखापूर्णस्फटिकशिलावत् अद्वयचिदाकाशस्वरूपः एव तिष्ठति। चेत् देहपुरुषः अभावरूपः अभविष्यत् तर्हि तेन किंचिदपि प्रवृत्तिः न अभविष्यत् मूर्छितपुरुषवत्। चेत् देहपुरुषे बद्धपुरुषवत् प्रवृत्तौ भावः निवृतौ च अभावः अभविष्यत् तर्हि देहसमाजे नियमबद्धा सुव्यवस्था न अभविष्यत् शब्दप्रकारान्तरतः देहः एव न समभविष्यत, भावासक्त्या। अनेन सिध्यति यत् देहपुरुषसह संपूर्णसृष्टिः शाश्वतभावरूपा चिदाकाशरूपा वा मुक्तपुरुषवत्। उपरोक्ते भिन्नरूपेण परं समानार्थेण कथिते देहपुरुषः सदैव आत्मपूर्णः परं आत्मस्फुरणलोभेन एव प्रवृत्तः यद्यपि आत्मस्फुरणरूपचित्तप्रति अनासक्त्या अतः सुव्यवस्थितरूपेण नियमबद्धत्वेन च प्रवृत्तः भवति प्रवृत्तिहीने अपि पूर्णात्मलाभत्वात्। एवमेव पुरुषः अपि पुराकाले आत्मपूर्णः एव आसीत् यः तद्वदेव आत्मस्फुरणसत्तालोभेन अप्रवर्तत परं एतत्स्फुरणासक्त्या सः आत्मस्वरूपम् व्यस्मारयत्, अतः स्फुरणलोलुपः भूत्वा अव्यवस्थितः, अस्थिरः, दुष्कर्मी कर्महीनः वा, नियममर्यादाहीनः, स्वेच्छाचारी अशान्तः च। निवृत्तौ अद्वैतं न उपलभ्यते। वास्तवेन येन यावन्मात्रायां अनासक्तिसह प्रवृत्तिः उपभुज्यते, तावन्मात्रायां एव तेन अद्वैतं अतः आत्मानुभवनं लभ्यते।

विलक्षणः एषः देहसमाजः। कामसदृशक्रियायां अपि कामाभावः, क्रोधे क्रोधाभावः, लोभलीलायां लोभाभावः, मोहाभिनये मोहाभावः, मदयुक्ताचरणे मदराहित्यं समत्सराः चापि ते अमत्सराः एव तिष्ठन्ति। एतदुक्तम् परस्परविरुद्धाचरणं केवलं अनासक्तिसिद्धेन चिदाकाशाद्वैतेन एव संभवम्। कामनिर्वचने ते अनासक्त्या सुखं अपि काङ्क्षन्ते अतः सुखकामपूर्तये ते विविधानि अन्नानि अश्नन्तः विविधानि कर्माणि कुर्वन्ति। देहसैनिकाः उग्रवादिभिः कृतेन विद्रोहीकृतेन च कर्मभिः अनासक्तिसह क्रोधिताः भवन्तः तन्नाशार्थं रजोगुणस्वभावं स्वीक्रिय समस्तदेहपुरुषसहयोगेन शत्रून् पराजयन्ति। लोभमोहनिर्वचने, देहराजकुमारीसह विवाहार्थं बहवः देहपुरुषाः प्रासादस्थैः राजसैनिकैः सह युध्यन्ते येन तेषु पुरुषेषु अनेकाः हन्यन्ते एकवीरं हित्वा यः एव तद्राजकुमारी सह विवहति अपि च जीवनशेषाः बहवः राजकुमाराः तया राजकुमार्या सह मानसिकसंगसुखाभावजनितात् मोहात् आत्महत्यां कुर्वन्ति। अन्ये परदेशे जीवितुं अशक्ताः देहात् बहिः पलायन्ते यत्र हिंसकैः असामाजिकैः च उन्मुक्ततया अटन्तैः सूक्ष्मपुरुषैः अंजसा एव व्यापाद्यन्ते। कदाचित् केनचित् चतुरशत्रुणा कुशिक्षिताः देहसैनिकाः देहपुरुषसहयोगेन मदोन्मत्ताः देशभक्तान् नैष्ठिकपुरुषान् तावत् ताडयन्ति मारयन्ति च यावत् देहदेशस्य महाराजा तत्संघर्षस्थाने प्रचुरसंसाधनानि मध्यस्थं च प्रेषयित्वा संघर्षविरामसंधिं न कारयति। कदाचित् मत्सरतया कश्चित् देहपुरुषसंगठनं समाजहितकराणि कर्माणि न कुर्वत् अपि संपूर्णदेहार्थाबन्टितभोगान् स्वयमेव भुञ्जत् स्वविकर्मकवंशं तीव्रवेगेन वर्धयति येन असंख्यपुरुषाः कृषाः, रोगिणः मृताः च जायन्ते।

यथा स्थूलसमाजे महिला कार्यदक्षतायां स्फूर्तौ च पुरुषात् न्यूना तथैव देहसमाजे अपि। तत्र अपि नारीभ्यः मुख्यतः प्रजननकार्यं एव विनिर्दिष्टं। यदैव कस्मिन्श्चित् देहभागे कार्यक्षमपुरुषन्यूनता अनुभूयते तदैव तद्भागस्त्रियः संबन्धितपुरुषैः उत्तेजकैः जैवरसायनैः संभोज्यन्ते। तदा उत्तमसुरक्षितेषु बहुभोगयुक्तेषु च अन्तःप्रकोष्ठेषु पालिताः ताः महिलाः नवजातान् जनयन्ति। तेषु नवजातेषु किंचित् शिशवः स्त्रीलिङ्गाः किंचित् च पुल्लिङ्गाः ये सर्वे प्रशिक्षणोपरान्तं देशकालानुसारं स्वनिर्दिष्टकर्माणि कर्तुं आरभन्ते। एतत् तथ्यं न

विस्मारितव्यं यत् चित्तवृत्तिसहजैः उपरोक्तैः व्यवहारैः सह चित्तवृत्तिसंभवाः सर्वाः मानवीयभावनाः प्रदर्शयन्तः अपि देहपुरुषाः स्वचित्तवृत्तिप्रति अनासक्ताः। आसक्तियुक्ताः चित्तवृत्तयः तथैव आसक्त्याशकाः यथा मक्षिकानिष्कासनार्थं तन्मक्षिकायुक्तदुग्धस्य उपलब्धिः आवश्यका। शरीरविज्ञानदर्शनेन आसक्त्याशः करतलगतः सर्वाधिकसुगमः वा।

देहसंसारे प्रतिदिनं संघर्षः परं कदाचित् भीषणसंग्रामः अपि जायते। देहदेशस्य बाह्यसीमा सकन्टकधातुना वेष्टिता यदा प्रतिकूलेन वातावरणेन प्रचन्डोग्रवादिभिः वा कश्चित्स्थाने भन्ज्यते तदा अनेकोग्रवादिनः अन्तःक्षेत्रे प्रविशन्ति। गृहयुद्धकाले गृहाव्यवस्थाकाले च ते आक्रमणार्थं प्रोत्साह्यन्ते। देहदेशे एकसैनिकश्रेणी तान् भुशुन्ड्याद्यस्त्रैः घ्नन्ति ततः तेषां किंचित् शवान् द्वितीयश्रेणीसमक्षं प्रस्तुवन्ति निरीक्षणार्थं। ततः तत्श्रेणीसैनिकाः तद्विशेषजातिभ्यः उग्रवादिभ्यः विशेषसंकेतयुक्तानि तद्रुचिप्रदपरिवस्त्राणि उत्पादयन्ति यानि तैः सहर्षं परिधत्तानि। तत्संकेतानि परिलक्ष्य तृतीयश्रेणीसैनिकाः तान् अन्जसः दूरतः चैव व्यापादयन्ति। एषा क्रियासंरचना अति निपुणताकरा यतोहि अनेन निर्दोषजनानां हानिः किंचिदपि च्युतिना निवार्यते सटीकतावृद्धित्वात् स्थूलदेशस्य गुप्तचरक्रियासंरचनावत्। काश्तकाराः तीव्रतया तत्र उपगम्य सीमाबन्धनं पूर्ववत् एव प्रतिष्ठापयन्ति तद्हानिं पूरयन्तः। तन्तुभन्जनादिपरिस्थितौ वास्तविकपुरातनतन्तवः एव योज्यन्ते परं तन्तुनाशे नवीनतन्तुः उपयुज्यते यद्यपि अवास्तविकः किंचिद्गुणन्यूनः च पूर्णगुणस्य तन्तोः अनुपलब्धित्वात्। स्थूलदेशे अपि ईदृशमेव दृश्यं दृश्यते यत्र पूर्णगुणाः वस्तवः पुनः-पुनः अंजसा न उपलभ्यन्ते। स्थूलसंग्रामवत् देहसंग्रामे अपि महद्जनहानिः जायते यत्पूर्तये स्थूलसैनिकस्त्रीवत् सूक्ष्मसैनिकस्त्रियः अपि उभयगुणसंपन्नान् पुत्रान् तीव्रवेगेन जनयन्ति। बाल्यकाले ते युद्धाक्षमाः बालसुलभचन्चलतया, कोमलतया अनुभवहीनतया च। राष्ट्रीयसेनायां नवनियुक्तेभ्यः सर्वयुवाजातेभ्यः सैनिकपुत्रेभ्यः सैन्यप्रशिक्षणं व्यवस्थीयते। अनुभविभिः वृद्धसैनिकैः अपि विकटपरिस्थितीषु स्वयोगदानं प्रदर्श्यते।

वास्तवेन देहदेशे कश्चिदपि पुरुषः जीविकाहीनः न तिष्ठति यतोहि तत्र जनसंख्यापूरकेभ्यः अकर्मकपुरुषेभ्यः अपि अनाजीविकाभत्तानामकाः समस्तजीवनयापनसुविधाः प्रदीयन्ते। तत्र कमाण्डोनामकाः अतित्वरितप्रतिक्रियाशीलसैनिकाः अपि विद्यन्ते ये न्यूनदेहभाराः यद्यपि अतिसौष्ठवाः। कदाचित् उग्राक्रमणे संपूर्णदेहदेशे प्रज्वाल्यमानाग्निना शीतान्धकाराभ्यस्ताः शत्रवः हतोत्साह्यन्ते। देहसैनिकाः परमवीराः यतोहि ते युद्धात् कदापि न निवर्तन्ते स्वदेहनाशे अपि मृत्योः अभावात् यदेव अनासक्त्या संभवं केवलं। देहपुरुषः परमभक्तवत्सलः भक्त्यधिकारिणः स्थूलपुरुषस्य पोषकत्वात् अतः देहपुरुषपोषणं सर्वश्रेष्ठपोषणं योगप्राणायामासनकर्मभोगादिविधिभिः। देहपुरुषचिन्तनं सर्वश्रेष्ठचिन्तनं अनासक्तिहेतुत्वात्।

पूर्वोक्ताः आक्रान्तारः शत्रवः देहदेशस्य औद्योगिकक्षेत्ररूपाणि जनसंख्यासघनानि अतिक्रियाशीलानि समृद्धसुकोमलानि अन्तःस्थानानि निग्रहीतुं अनेकमार्गान् विध्वन्सन्तः परिणामतः तन्मार्गसेवितानां क्षेत्रनिवासिनां, तदोत्तेजितक्षेत्रप्रविष्टानां सैनिकानां स्थानीयसुरक्षाबलानां च खाद्यजलापूर्तिं अवरोधयन्तः, लघुमार्गेषु प्रसरित्य असन्ख्यान् निर्दोषान् विभिन्नदेहपुरुषान् व्यापादयन्तः फलस्वरूपतः संपूर्णदेहदेशस्य मुख्यतः प्रभावितक्षेत्रस्य जनजीवनं प्रभावयन्तः, देशवासिभ्यः निर्दिष्टान् भोगान् स्वयमेव उपभुञ्जन्तः, स्वसन्ततीं तीव्रतया वर्धयन्तः ततः तान् युद्धार्थं प्रशिक्षयन्तः असंख्यभवनादिसंरचनाः च उत्सादयन्तः अग्रेसरन्ति। किंचिद्कुशाग्रबुद्धिशत्रवः देहदेशं सद्यः न नाशयित्वा चिरकालपर्यन्तं लाभान्विताः तिष्ठन्ति यद्यपि शत्रुशोभ्यात् स्वशत्रुसमाजाभिन्नात् आचरणात् केवलं देहदेशखाद्यं एव अवनयन्ति। अतिमूर्खाः पापपूर्णाः च शत्रवः तु ब्रह्मास्त्रैः परमाण्वस्त्रैः वा पर्वतान् विदारयन्तः, जलाशयान् अन्नभण्डारान् च अवशिष्टैः पूरयन्तः यत्कश्चिदपि च दृष्टान् संघट्टितान् निर्दोषान् चापि जनान् व्यापादयन्तः अग्रेसरन्ति येन संपूर्णदेशः शीघ्रतया एव नश्यति। वास्तवेन ईदृक्शत्रवः अतित्वरिताः, अतिनिष्ठुराः इन्द्रजालिकाः(मायाविनः) च, अतः सैनिकैः प्रतिकारायोग्याः। एतादृगवसरे उच्चतकनीका विदेशीया सहायता याच्यते यदेव शत्रूनाशनार्थं सक्षमा यद्यपि अविलंबे प्रारम्भिककाले चैव सुफलप्रदा।

कर्मयोगिनः देहपुरुषस्य पूर्णस्वरूपतायाः प्राप्तये अनेकाः विधयः वर्णिताः सन्ति अपि च सर्वविधिषु देहपुरुषवत् अनासक्तिपूर्वकं आचरणं एव मूललक्ष्यं। तर्हि शरीरविज्ञानदर्शनरूपं परमलघुमार्गं हित्वा वयं किमर्थं दीर्घमार्गान् अनुधावामः अर्थात् सद्यः एव देहजनवत् आचरणं न आरभ्य किमर्थं ताभिः अन्याभिः क्लेशप्रदविधिभिः आकृष्यामहे यत्क्लाम्येन लक्ष्यरूपं मुख्याचरणम् एव अवमन्यते। देहपुरुषः एव ब्रह्मा अस्ति देहरूपसंपूर्णसृष्टेः निर्मातृत्वात्। सः एकाकी एव संपूर्णदेहब्रह्मान्डम् सपर्वतमार्गसरोवरजीवोद्यानक्षेत्रवननदीसमुद्रवायुरनलादिपञ्चभूतं सरूपादिपञ्चतन्मात्रं सकर्मेन्द्रियज्ञानेन्द्रियं उद्भावयति। तद्ब्रम्हणः मनसि अनेकरूपाकारयुक्तानां देहब्रह्मान्डानां सूक्ष्मरूपाः विद्यन्ते यदनुसारमेव सः चित्रविचित्राणि ब्रह्मान्डानि रचयति। समस्तां सूक्ष्मसृष्टिं सूक्ष्मनारायणः परमादेशकदेहपुरुषः पालयति, विवर्धयति रक्षति च। विनिमये कृतज्ञतया सर्वे देहपुरुषाः त्रिदेवं प्रमुखतया देहनारायणं जठराग्निना पक्वान्नस्य सूक्ष्मरसरूपयज्ञाहुतिभिः यजन्ते। यदा कालेन एतद्ब्रह्मान्डः कृशः जायते तदा देहमहेशः संहारादेशकः स्वरूद्रगणैः स्वक्षुधानिवृत्त्यर्थं समस्तब्रह्मान्डम् भक्षति ततः तैः सह स्वयमपि विलीयते।

यथा ईश्वरः सदैव आत्मना एकरूपः परं देशकालानुसारं चित्रविचित्राणि देवानां रूपाणि गृह्णाति तथैव देहपुरुषः अपि एकेश्वररूपः एव यः देशकालानुसारं विभिन्नानि आश्चर्यमयानि रूपाणि गृहीत्वा विभिन्नानि कर्तव्यानि पूर्णनिष्ठया आचरति।

देहपुरुषाः, सूक्ष्मदेवाः देहदेवाः च सर्वे पर्यायाः यतोहि देहपुरुषाः देववत् एव कर्मप्रधानाः, अनासक्ताः अद्वैताः च। अपि च वेदेषु अपि संपूर्णशरीरे देवाः व्याप्ताः कथिताः मुख्यतया धेनुशरीरे। सर्वजीवेभ्यः सर्वसुविधाप्रदातृत्वात् अपि देहपुरुषाः देवरूपाः एव सिध्यन्ति यथा श्वसनतन्त्रस्थाः देहपुरुषाः वायुदेवरूपाः, देहजलनियामकदेहपुरुषाः वरुणदेवरूपाः नेत्रस्थपुरुषाः च सूर्यदेवरूपाः।

क्रियाशीलताप्रेमिभिः पुरुषैः देहपुरुषाणां अद्वैतमया वा अनासक्तिमया वा निर्लिप्ततामया वा क्रियाशीलता अनुसरणीया परं ज्ञानप्रेमीजनैः देहपुरुषचिदाकाशता ध्यातव्या।

स्थूलपुरुषवत् सदेहशासकाः सर्वे देहपुरुषाः अपि स्वसत्तानुकूलमेव आचरन्ति अतः तैः सर्वदेहपुरुषसत्तानुकूलं आचरणं स्वतः एव आचर्यन्ते सर्वदेहपुरुषैः परस्पराश्रितया सत्तया। यतोहि सर्वाः सत्ताः परमसत्तायाः आत्मनः अंशाः अपि च सत्तालोभः आत्मप्राप्तौ एव परिसमाप्यते अतः सिध्यति यत् आत्मा एव यत्किंचित् सर्वेषां प्रेरकः। आत्मलाभार्थं स्थूलपुरुषाः स्वार्थवशेन न आचरन् आत्मप्रीत्यर्थं वा सर्वप्रीत्यर्थं वा आत्मदृष्ट्या वा एव आचरन्ति। यतोहि देहपुरुषाः सदैव आत्मप्रीत्यर्थं एव आचरन्ति अतः सिध्यति यत् देहपुरुषाः आत्मरूपाः।

समाजबहिस्थसज्जनवत् पालितपशुवत् वा बहवः देहपुरुषमित्राः सूक्ष्मपुरुषाः अपि स्वसत्तापूर्तिसह देहदेशहितं अपि साधयन्तः देहदेशात् बहिः सुखपूर्वकं विचरन्ति। असामाजिकाः दुर्जनाः सूक्ष्मपुरुषाः अपि केवलं स्वहितमेव साधयन्तः परं देहदेशप्रति हानिकराः देहदेशबहिः विचरन्तः तिष्ठन्ति। ते दुर्जनान्, कुपोषितान्, अनियमितान्, अस्वच्छान्-अशोभनीयान्, कुप्रबन्धान अपव्ययिनः च देहदेशान् एव मुख्यतया प्रताडयितुं शक्नुवन्ति तथैव यथा स्थूलशत्रवः संसाधनहीनान्, कुप्रबन्धान्, अस्वच्छान्-अशोभनीयान्, अनियमितान्, अपव्ययिनः गृहयुद्धग्रस्तान् च स्थूलराष्ट्रान्।

शरीरविज्ञानदर्शनानुसारं देहपुरुषः देवतासमतुल्यः यतोहि उभौ अनासक्तौ, अद्वैतौ महामानवरूपौ च। यथा देहपुरुषस्य बाह्यरूपस्य ध्यानात् किंचिदपि न अपेक्षितलाभं अपितु तस्य अद्वयस्य अनासक्तस्य च आत्मरूपस्य ध्यानात् एव योगसिद्धिः तथैव देवपुरुषस्य अपि। मूढ़जनाः देवानां आत्मस्वरूपं विस्मृत्य केवलं बाह्यरूपं सुनयनकर्णधृतदेहं एव पूजयन्तः अनादिकालात् विमोहिताः। बाह्यरूपः केवलं प्राथमिकपूजोपचारार्थं एव यावत् देवात्मनि चित्तं न स्थिरीभवेत्। निस्संदेहं बाह्यरूपं अपि पूजयेत् परं आत्मरूपं कदापि न त्यजेत्। निस्संदेहं उभयरूपपूजनम् विवर्धितलाभकरं परं केवलमात्रं बाह्यरूपपूजनं कालव्ययमेव। योगासनमध्ये लयबद्धश्वासवायुः अपि अनासक्तिं जनयति शरीरविज्ञानदर्शनवत्। देहपुरुषप्रतिमा अपि देवप्रतिमासदृशा दिव्यमानवरूपधरा।

शविदाचारेषु तद्दर्शनसहितं शरीरविज्ञानाध्ययनं, शरीरविज्ञानदार्शनिकसान्निध्यं, देहपुरुषवत् अनासक्तिमयाचरणम् देवरूपदेहपुरुषानुध्यानं च मुख्याः सन्ति। स्वचालितयन्त्राः अपि ब्रह्मरूपाः एव मन्तुं शक्यन्ते परं अनेन लक्ष्यप्राप्तिकाठिन्यं तेषां देहपुरुषविपरीतात् निर्जीवसदृशाचरणात् अर्थात् तेषु चित्ताभावात्, यतोहि सर्वे स्वसदृशं एव अनुकुर्वन्ति।

देहदेशे वर्णितयुद्धे देहरक्षकाः अपि हस्तयोः अस्त्राणि शस्त्राणि च प्रगृह्य अश्वहस्तिरथादिषु जीववाहनेषु स्वचालितयान्त्रिकेषु वाहनेषु च आरुह्य स्वेभ्यः सुरक्षितेभ्यः भोगविलासयुक्तान्तःस्थानेभ्यः निःसृत्य अनेकविधमार्गान् आश्रयन्तः शत्रधिगृहीतसीमाक्षेत्रान् प्रति अग्रेसरन्ति। तैः सार्धं अनेकविधानि खाद्यपेयवस्त्रास्त्रशस्त्रौषध्यादिवस्तूनि पाचकवैद्यनापितसेवकादिसर्वकिङ्करसहायकाः चापि यथापूर्वाः अनेकविधवाहनेषु आरोह्यमानाः नीयन्ते। गहनवनमध्ये शत्रून् दृष्ट्वा बहवः सैनिकाः लघुवनमार्गान् विसृज्य मुक्तवनान् प्रति धावन्ति तथा तत्र गुल्मवृक्षतृणशिलाकन्दरापर्वतसरोवरनदीतीरेषु देहसैनिकभयात् अदृश्यतागतशत्रून् अन्विष्य तैः सह अनेकयुक्तिभिः युध्यन्ति। ते अन्योन्यं मुष्टिगदासिदण्डग्राववृक्षाग्निरसायन्भुशुन्डीनामादिभिः शस्त्रास्त्रैः यत्किंचिदन्योपलब्धघातकवस्तुभिः च घ्नन्ति। तद्प्रहारमारितशत्रवः निकटस्थदाहसंस्कारभूमौ नीयन्ते ततः लौकिकरीत्या दह्यन्ते। तत्सूक्ष्मावशेषाः भूमौ विलीयमानाः देहदेशभूमिपुष्टिकराः भवन्ति। युद्धे जीवनशेषसैनिकाः किंचित्कालं संघर्षमार्गं विस्मृत्य आनन्दप्रदैः अन्यैः मनोहरमार्गैः विहरन्तः आनन्दन्तः च अन्तःपुरान् विनिवर्तन्ते। सीमासुरक्षाबलाः तत्रैव तिष्ठन्ति प्रारम्भकालिक युद्धार्थं केन्द्रीयसुरक्षाबलानां आवाहनार्थं च पुनरावष्यकतायां। यत्कर्माणि पुरुषैः चिदाकाशांशाभिः चित्तवृत्तिभिः क्रियन्ते तदेव देहपुरुषैः चिदाकाशेन। उभयपक्षयोः एव चेतनतावर्धकानि कार्याणि समानानि चेतनकर्तासमानतया।

कदाचित् बहुसन्ख्यकाः शत्रवः छद्मवेषादिभिः श्रान्तसैनिकान् वन्चन्तः अतः तत्प्रहारेभ्यः शेषजीवनाः तीव्रवेगेन पलायन्तः ततः लघुमार्गेषु प्रसरन्तः राजमार्गेषु प्रविशन्ति। तत्र प्रविष्टेषु शत्रुषु बहवः शत्रुनिरीक्षणार्थिभिः अटन्तैः सैनिकसमूहैः हन्यन्ते परं किंचित्लघुसंख्यकाः अन्तःपुरेषु प्रविशन्ति यत्र प्रचण्डाभिः सुरक्षाव्यवस्थाभिः भस्मीभूयन्ते अन्यथा अन्तःपुराः स्वयमेव तैः भस्मीभूयन्ते चेत् सुरक्षालाघवः। वास्तवेन राजधानीक्षेत्राणि एव शत्रूणां मुख्यध्येयाः भवन्ति यत्र सर्वश्रेष्ठा प्रतिरक्षाप्रणाली विद्यते अपि च यत्र प्रचण्डतमम् युद्धं युध्यते। वास्तवेन यदा देहदेशः संसाधनाभावात् अशान्तः क्लान्तः च जायते अथवा तस्मिन् केन ध्यानाकर्षकगतिविधिना तदधिष्ठाता अनेकाग्रध्यानः भवति तदा तत्प्रभावात् देहसैनिकाः अपि कार्यक्षमतान्यूनाः भवन्ति येन सीमाक्षेत्रनिकषा अटन्तः शुभावसरान्वेषीशत्रवः छद्माक्रमणं विदधन्ति यत् अनेकधा अप्रतिकार्यं, मित्रदेशसहायतयापि,कदाचित्।

बहवः छद्मयोद्धाजातिशत्रवः सैनिकानिव परिधानानि आभरणानि च परिधाय ततः सुरक्षिताः भूत्वा चिरकालपर्यन्तं देहदेशं शनैः-शनैः क्षाययन्तः तिष्ठन्ति। देहपुरुषाः तैः सह अप्रसन्नाः भूत्वापि स्वजनमोहवत् मोहिताः तान् स्वदेशात् न निष्कासयन्ति। देहदेशसंसाधनैः सुसज्जिताः शत्रुसंततिः देशात् बहिः निष्क्रम्य अन्यदेशोपरि आक्रमणावसरं चिरकालपर्यन्तं प्रतीक्षन्ते कदाचित् च खाद्यपेयाभावात् शीघ्रमेव नश्यन्ति अपि। देहदेशस्य एतदवस्था दयनीया पराधीनतापूर्णा च। देशद्रोहीपुरुषाः अपि विदेशीयासामाजिकान् पापीपुरुषान् पोषयन्ति रक्षन्ति च। देशप्रेमीपुरुषाः अपि विदेशीयान् परं सामाजिकान् पुण्यात्मपुरुषान् आश्रयन्ति स्वदेशहितार्थमेव। छद्मशत्रवः देहदेशसंसाधनैः संतृप्ताः स्वसंख्यां तीव्रतया वर्धयन्ति कदाचित् च बहिस्थेभ्यः शत्रुभ्यः अपि तानि संसाधनानि प्रेषयन्ति। यदा एतत्प्रकारात् अनेककारणवशात् देहदेशसंसाधनानि ततः सज्जनदेहपुरुषाः क्षीयन्ते तदैव उत्पथगामिनां देहपुरुषाणां संख्या विस्फुटति। ते पूर्वोक्तरीत्या देहदेशनाशनम् प्रारभन्ति येन अनेकाः पुरुषाः अपि हन्यन्ते। एतदवस्थायां महत्क्रान्तिः गृहयुद्धं वा देशे प्रसरति यस्मिन्

सर्वसैनिकाः पूर्णशक्त्या निर्ममजातमित्रवेषधरैः शत्रुभिः सह युध्यन्ति ततः तान् मारयन्ति निष्कासयन्ति च। तत्पोषकाः स्वदेशीयाः पुरुषाः अपि मृत्युदण्डेन दण्ड्यन्ते। विपरीततः देहदेशे अतिक्षीणे जाते शत्रवः संपूर्णदेशं उत्सादयन्ति येन नवदेशनिर्माणमार्गः प्रशस्तः भवति।

पुराकालिकानुभवात् नवदेशः नष्टदेशात् श्रेष्ठतरः एव निर्मीयते। असंख्ययन्त्राणि,उद्योगानि पुराणि च निर्मीयन्ते। नवमार्गाः जलकुल्याः च खन्यन्ते। वनप्रदेशाः पुनः विकसन्ति। भूमयः उन्नीयन्ते। विद्युतसंचारूर्जादिसर्वविभागाः अपि पुनः प्रतिष्ठाप्यन्ते। अपशिष्टपरिशोधननिष्कासनप्रणाली पुनः विकसति। गृहोद्योगप्रयुक्तजलस्य शोधननिष्कासनप्रणाली अपि पुनः विकसति ततः विवर्धति च अर्थात् देशप्रसारानुसारं प्रसरति अपि। नवजलाशयाः कूपाः च खन्यन्ते। नवपशवः अन्यदेशेभ्यः आनीयन्ते ततः स्वजीवननिर्वाहार्थं पाल्यन्ते। नवराष्ट्राध्यक्षेण शासनाज्ञानिना राष्ट्रपरिचालनविधिः प्रतिवेशीराष्ट्राध्यक्षेभ्यः शिक्ष्यते,अवलोकनमात्रेण विधिपूर्वकं वा। कदाचित् राज्ञः बुद्धिहीनतया अनुभवहीनतया वा समग्रसूक्ष्मराष्ट्रम् नाशं प्रति अपि अग्रसरति। नवसेना विविधश्रेणीभिः सह निर्मीयते येषु विभिन्ननवयुवकाः उपयुक्ततानुसारं नियुज्यन्ते प्रशिक्ष्यन्ते च। मन्त्रीगणसभासदसह विचारविमर्शोपरान्तं एव नवविदेशनीतिः निर्धार्यते। प्रतिवेशीदेशैः सह मधुरसंबन्धं निर्मीयते। विभिन्नविभागेषु नवनियुक्तयः देशकालयोग्यतानुसारं तीव्रतया प्रदीयन्ते। जनन्यूनत्वात् जनसंख्या तीव्रतया वर्धते।

ब्रह्मप्राप्तये मनोवशीकरणाय च बहवः उपायाः परं कर्मशीलजनेभ्यः देहजनवत् अद्वैताचरणं एव सर्वसुलभं यद्यपि विश्रामकाले अन्योपायाः अपि योग्याः यतोहि चतुर्दिगाक्रमेण एव आत्मबन्धनशत्रुः मारणीयः। जड़मनत्वात् किंचिदपि सार्थकानि कर्माणि कर्तुं कश्चिदपि न समर्थः। पुरुषः ब्रह्मांशरूपतया चित्तवृत्तिरूपतया अल्पानि सार्थककर्माणि एव कर्तुं शक्नोति। अनेन सिध्यति यत् ब्रह्मस्वरूपतया पूर्णसार्थककर्माणि स्वतः एव क्रियन्ते अपि च यत् पूर्णसार्थकतया कर्मकर्ता देहपुरुषः ब्रह्मस्वरूपात्मा एव,न तु जड़स्वरूपः नैव च अल्पचेतनः चित्तस्वरूपः।

कदाचित् परमाणुयुद्धशेषभूमौ अन्यदेशसहयोगेन मुख्यतया प्रतिवेशीदेशसहयोगेन नवदेशबीजः आरोप्यते। सर्वसंरचनाः सर्वप्रणाल्यः च पूर्ववत् तदधिकोन्नतरूपेण वा निर्मीयन्ते यद्यपि परमाणुविकिरणात् देहपुरुषाणां सुरक्षार्थं बहवः उपायाः प्रयुज्यन्ते। नवाननुभवीजनबाहुल्यात् नवदेशः सुकोमलः अस्थिरः च भवति। देहदेशस्य पुनर्विकासार्थं देहपुरुषाणां उत्पादकता कर्मठता च चर्मोत्कर्षेण प्रसरन्त्यौ लोकमोहिन्यौ। एतद्जनव्यस्ततया देशः अनेकधा शत्र्वाद्युत्पथगामिभिः सरलतया एव ग्रसितः यदपाकर्तुं देशविकासः किंचित्कालपर्यन्तं बाधितः अपि। कदाचित् तद्व्यस्ततावातावरणतनावादिबाह्यान्तःकारणानुरूपपोषणव्यायामादिजीवनचर्याभावात् प्रबलतां जाताः शत्रवः तद्देशस्य कश्चिदंगं अङ्गानि वा दुष्प्रभावयन्ति। सीमाक्षेत्रांगानि विशेषतया दुष्प्रभाव्यन्ते।

कदाचित् शत्रवः समुद्रमार्गेण आक्रम्य नदीः प्रवाहविरुद्धं तीर्त्वा दूषितजलशोधकयन्त्रान् दुष्प्रभावयन्ति येन समस्तदेहदेशः विशाक्तजलाप्लुतः भवति अपि च जलमिश्रिताः लाभकरपदार्थाः शोधकयन्त्रैः न परिष्कृत्य नदीषु वहन्तः समुद्रे प्रविशन्तः नष्टाः भवन्ति। एवमेव कदाचित् सीमाद्वारेषु भ्रष्टाचरणेभ्यः देहसैनिकेभ्यः अदृष्टाः शत्रवः अन्तःप्रविशन्ति ततः सैनिकेभ्यः अलक्षिताः अपराजिताः वा देहदेशविध्वंसनं प्रारभन्ते। कदाचित् समुद्रतटम् आक्रम्य जलयानबाधनात् देहदेशस्य आयातनिर्यातं दुष्प्रभावयन्ति। कदाचित् ऊर्जाजनकपदार्थायातद्वारैः अपिधानैः देशीयतनावजनितरक्षाच्युतिभ्यः अन्तःप्रविष्य सीमानिकषा स्थितान् ऊर्जासंयन्त्रान् विदारयन्ति प्रत्यक्षेण धूम्रविस्फोटकैः प्राणवायुरोधनात् च। कदाचित् सीमानिकषा अपिधानेषु द्वारेषु स्थितान् दूरसंचारयन्त्रान् आक्रम्य तद्देशं विश्वस्तेभ्यः अन्यदेशेभ्यः विश्लेषयन्ति येन प्रभावितदेशस्य महदहानिः जायते समाजबहिस्थितित्वात्। कदाचित् अग्निजलवायुपश्वादिभिः भग्नः सीमारज्जुः बहुकालपर्यन्तं न पुनःस्थाप्यते देशीयतनावात् येन शत्रवः सुगमतया अन्तःप्रविशन्ति।

एतद्समस्यानां रोगाणां वा चिकित्सार्थं कदाचित् विदेशेभ्यः चिकित्सकाः उपानीयन्ते। प्रारम्भे देशप्रेमीदेहपुरुषैः तत्चिकित्सा अपकुर्यते परं लाभे दृष्टे संकोचेन स्वीक्रियते अपि। चिकित्सायां असफलायां विदेशीयांगप्रत्यारोपणं अपि विधीयते यद्यपि देहपुरुषैः तदंगम् पूर्णतया बहिष्क्रियते। अति विरोधे जाते जनांदोलनशान्तिकराः उपायाः औषधिरूपेण प्रयुज्यन्ते। अनेकधा स्व अति दीनहीनदशायां देहदेशः विदेशिनं स्वशासनार्थं आमन्त्रते अपि यद्यपि शनैः-शनैः संचितात् जनविद्रोहात् तत्शासनं अस्थायीरूपं एव भवति। एतत्विचारणीयं यत् सूक्ष्मसंसारे सर्वपुरुषाः मुक्ताः एव सन्ति मर्यादापालनत्वात् यतोहि मर्यादाहीनत्वं एव बन्धनलक्षणं। देहदेशस्य अधिकांशकार्याणि राज्ञः आदेशं विना अर्थात् केवलं तदुपस्थित्या तद्भयात् वा एव जायन्ते। सर्वाणि कार्याणि अधिकारिभिः एव क्रियन्ते। विशेषक्रियार्थं विशेषतः विदेशनीतिक्रियाकलापार्थं एव राजादेशः अपेक्ष्यते। अनेन राज्ञः अतिमहत्त्वं दृश्यते।

शरीरविज्ञानदर्शनं तन्त्रदर्शनं इव एव उपस्थितं। यथा योगसाधनायां पूर्णत्वे शीर्षे वा तन्त्रदर्शनं आश्रयते सर्वसाधारणजनवत् सम्यक् जीवितुं तथैव शरीरविज्ञानदर्शनं अपि आश्रयितुं अर्ह्यते। उत्पथगामिभिः सदैव आश्रयणीयं सद्बुद्धेः प्राप्त्यर्थं। तदर्थं शरीरविज्ञानदर्शनं उपयुक्ततरं। योगतन्त्रदर्शने उभये एकसार्धं आश्रिते तीव्रतमेन फलप्रदे। पतन्जलेः राजयोगस्य अष्टपादाः अष्टस्तररूपाः न सन्ति यतोहि ते एकसार्धं एव अभिवर्धते क्षीयते वा,न क्रमशः। आसनप्राणायामपादाभ्यां सह यमनियमपादौ प्रत्याहारधारणापादौ च स्वयमेव अभिवर्धन्ते। ध्यानपादः अपि वर्धते परं कश्चिदपि भौतिकध्येयप्रति,येन प्रचण्डभौतिकोपलब्धिः अपि लभ्या यद्यपि परमलक्ष्यं समाधिम् हित्वा यतोहि एकरूपता केवलं परमात्मासह परमप्रेमीसह वा एव संभवति। अतः सर्वयोगपादैः सह ईश्वरसान्निध्यं गुरुसान्निध्यं च प्रतिक्षणं आवश्यकं। यया शक्त्या धार्यते सा धारणा। यावती अधिका मनसि धारणा तावदधिकाः तस्मिन् नवीनाः संकल्पाः भावनाः च। अनेन एव तावदधिकः व्यक्तित्वविकासः। यावदधिकाः पुरातनसंकल्पभावनाः स्मरणरूपाः तावदधिकाः तासां लयाः। यावन्मात्रालयाः तावन्मात्राधारणा। यावन्मात्रायां इन्द्रियनिग्रहणं प्रत्याहारः वा नवीनसंकल्पेषु भावनासु च अनासक्त्या तावद्मात्रायां धारणा पुनः विवर्धते। नवीनपुरातनसर्वसंकल्पेषु भवनासु च विलीनेषु चित्तं शून्यप्रायः भवति। अधिकांशसाधकाः एतदवस्थातः विभेति अतः इन्द्रियैः वन्च्यन्ते बहिर्मुखाः क्रियन्ते च येन तेषां संकल्पसंग्रहस्य परम्परा पुनः प्रसरति व्यक्ताव्यक्तरूपेण। किंचित्सुभगसाधकेषु ईश्वरगुरुसान्निध्यात् एषा

धारणा इन्द्रियैः न निस्सृत्य पूर्णतः ईश्वरगुरुमुखा भवति अर्थात् ध्याने परिवर्तते। एतत्स्वतःसुलभध्यानकाले एव पाणिनेः योगस्य श्रेष्ठतमपादः समाधिः आत्मानुभवनं वा अनायासं एव लभ्यते। सर्वप्रियवस्तुबलिदानस्य सिद्धान्तः एतदेव अस्ति यतोहि सर्वप्रियवस्तु सर्वाः व्यक्ताव्यक्ताः चित्तवृत्तयः एव सन्ति। अतः अस्य त्यागात् चित्तशून्यता अनायासमेव उद्भवति। एतज्ज्ञातव्यं यत् त्यागः अनासक्त्या एव कर्तुं शक्यते। यद्वस्तुप्रति वयं आसक्तः तत्त्यागः असंभवः, चेत् हठात् त्यज्यते तर्हि मनोरोगस्य संभावना। अतः सर्वधर्ममतानुसारं अनासक्तिः एव मोक्षमूलका।

यथा स्थूलसमाजस्य किंचिदत्यल्पप्रारम्भिकविकासोपरान्तं एव तद्राजा चीयते तथैव सूक्ष्मसमाजस्य अपि। स्थूलदेशराजा स्थूलदेशात् प्राक् एव मरति परं देहदेशराजा देहदेशसह एव नश्यति। स्वराजापतनसह किंचित् नाशः उभयदेशयोः। सर्वपुरुषेषु केवलं देहदेशराजा एव बद्धः अहङ्कारात् ततः चासक्त्या। पश्य किंचिच्छत्रुणां अतिबुद्धिमत्ता येन ते देहदेशं शनैः-शनैः क्षाययन्तः तस्यातिप्रबलरक्षापङ्क्तिं न उत्तेजयन्ति। यथा स्थूलदेशस्य असामाजिकाः जनाः स्वसमाजं वञ्चन्तः स्वखाद्यं गुप्तस्थाने स्वहितार्थं एव गोपयन्ति तथैव असामाजिकाः सूक्ष्मपुरुषाः अपि स्वभोजनं विषप्रसारेण। शरीरविज्ञानदार्शनिकः स्वतन्त्रविचारं सर्वश्रेष्ठं प्रस्तौति अन्यविचारेभ्यः अप्रभावित्वेन यतोहि सः अनासक्तः तिष्ठति। यथा स्थूलदेशे सर्वे अधिकारिणः अध्यक्षाः च राजादेशपालकाः तदनुगामिनः च भूत्वा निरहंकाराः जीवन्मुक्ताः तिष्ठन्ति स्वार्थाभावात् तथैव देहदेशे अपि सर्वाध्यक्षाः अधिकारीपुरुषाः च पूर्णमुक्ताः एव तिष्ठन्ति केवलमात्रं चित्तात्मरूपराजानं हित्वा। केवलं सः स्थूलपुरुषः एव बद्धः समस्तसृष्टौ आसक्त्या द्वैतेन च। तस्य आत्महानौ आसक्तिमयाः कर्मव्यवहाराः अथवा चित्तवृत्तिमात्रानुसारं योगादिसाधनासमूहाभावः अथवा देहपुरुषचिन्तनाभावः एव कारणं। कर्मठोद्योगीप्रकारजनैः कर्मभिन्नसाधनानां दुष्प्रापणं अतः तेन स्वजीवनदेहपुरुषजीवनसमकक्षताचिन्तनं एव पर्याप्तं अपि च सर्वश्रेष्ठं। सृष्टिस्थूलदेशदेहदेशात्मक्रियाकलापानां समकक्षताध्यानेन आनन्दमयनिद्रा अपि लभ्यते रक्तचापः च नियन्त्र्यते एतद्ध्यानजाततनावराहित्येन, मनोस्थैर्येण, अनासक्त्या, निरहंकारतया अद्वैतेन च।

उच्चचेतनाजनाः देहपुरुषवत् एव अत्रुटिपूर्वकं सर्वजीवानन्दवर्धकानि कर्माणि कुर्वन्ति परं निम्नचेतनाः एतद्विपरीतानि। यथा दृश्यते यत् जीवसहिताः सर्वपदार्थाः निजस्वभावसदृशं एव आचरन्ति येन देहपुरुषस्य चेतनब्रह्मरूपता निश्चयेन सिध्यति तच्चेतनतावर्धकस्वभावात्। गीतायाः उक्तिः यत् "स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्" इति देहपुरुषवत् अद्वैतदृष्टिकोणसंबन्धे एव वर्णयति अर्थात् दन्तमन्जनस्नानादिषु साधारणक्रियासु अपि देहपुरुषवत् अद्वैततानासक्तयोः कृतासु मुक्तिः लभ्यते।

शत्रोः तदाक्रमणं किंचित्तीव्रस्मृतिसंपन्नाः वृद्धदेहसैनिकाः इतिहासकाररूपाः अनुभविनः शत्रुपरिचयसह स्मरन्ति यस्मात् ते तत्शत्रोः पुनराक्रमणकाले तद्युद्धनीतिं प्रतिकारयुद्धनीतिसह समस्तदेहसैनिकान् शिक्षयन्ति। अनेन ते अनायासमेव विजयं लभन्ते। अनेकदा देहदेशः शत्रुदेशात् आक्रमणशिथिलान् उदारान् धार्मिकजनान् आमन्त्र्य मित्रवत् सेवते। ते शत्रुनीतिज्ञाः कृतज्ञतया आक्रामकशत्रुनाशार्थं सहायान्ति देहसैनिकसह युद्धाभ्यासात् सम्मिलितप्रषिक्षणात च। अनेन यद्यपि ते स्वमातृकुटुम्बद्रोहजातेन ग्लानिना मृतप्रायाः एव। एते सर्वे उग्रवादिनः व्यवस्थितदेशेन नैव अपितु जनजातीयसमूहेन संबन्धिताः भवन्ति,यद्यपि कदाचित् व्यवस्थितदेशेन आश्रितायन्ते,अन्यदेशान् मुख्यतः प्रतिवेशीदेशान् अवनेतुं। एवमेव अनेकदा मित्रदेशसहायतया कदाचित् च स्वतःप्राप्तशत्रुभ्यः शिथिलेभ्यः स्वदेशोपरि प्रपञ्चसम्मतं आक्रमणावसरं तथा न्यूनतमहानिसह संपूर्णदेहदेशे तद्प्रसारावसरं प्रदीयते परं सर्वे शिथिलतागतसैनिकैः अनायासमेव व्यापाद्यन्ते येन ते पुनः स्फूर्तिम् प्रशिक्षणं च लब्ध्वा तत्शत्रुजातियुद्धनीतिज्ञाः भवन्ति यतः भविष्ये तन्महदाक्रमणं अपि सरलतया एव प्रतिकुर्वन्ति। किंचिद्देहासुराः अतिचतुराः भवन्ति। ते स्वपराजये संभाविते देहदेवानां नतमस्तकाः युद्धं निवारयन्ति। ते तपः कर्तुं उद्युक्ताः देवानां हितैषितां वदन्तः पाखण्डेन्, तपः चरन्ति यावत् देवशैथिल्येन प्रबलतराः न जायन्ते। तदा ते छलात् देवान् हन्तुं प्रारभन्ते यावत् देहेन्द्रः मिथ्याहंकृतिं परित्यज्य देहनारायणं न श्रयते। तदा नारायणसान्निध्येन प्राप्तशक्त्या स्फूर्तिम् लब्ध्वा अनुशासितः भवति। अनेन सह स्वदेवसेनां उत्कृष्टतया नियन्त्र्य असुरान् विजयति। विशिष्टराजयोजनां विना अपि निम्नसुरक्षाधिकारिभिः स्वयमेव शत्रुसह लघुसंघट्टनं यदा कदा जायमानः भवति परं तेन तत्महानशत्रुप्रतिरोधं न प्राप्यते यत् योजनानिर्मितयुद्धेन, देहदेशस्य लघुभागे एव पूर्वस्य उपस्थित्या।

प्रबलशत्रुसह महायुद्धे काले अधिकांशदेशाः व्यापाद्यन्ते विदेशीयास्त्राभावात्। किंचिद्देशाः एव विदेशीयास्त्रसुसज्जिताः तान् जेतुं शक्नुवन्ति। किंचिद्देशाः स्वदृढतया उन्नत्या च एव विजयिनः भवन्ति। देहपुरुषवत् स्वाभाविकता, निर्लिप्तता, अद्वैतता, कर्मठता जीवहितैषिताद्याः च अनेकाः मानवीयगुणाः जगतः सर्वधर्मेषु महिमान्विताः सन्ति अतः शरीरविज्ञानदर्शनं तन्त्रदर्शनं सार्वभौमिकदर्शनं।

देहदेशरक्षणार्थं मुख्यतः तिस्रः प्रणाल्यः वर्तन्ते। प्रथमप्रणाल्यां निर्विशिष्टाः अवरोधकतत्त्वानि यथा सीमाभित्तिः, शत्रुसंकेतकयन्त्राः शत्रुमारकाः साधारणसुरक्षाबलाः च मुख्याः सन्ति स्थूलदेशस्य पुरभित्तिद्वारपालवत्। द्वितीयरक्षापङ्क्तौ संपूर्णदेशे निर्विशिष्टाः रक्षकाः भ्रमन्तः तिष्ठन्ति ये आक्रमणस्थाने एकत्रीभूय एकदृष्ट्या त्रुटिराहित्येन च मदाप्लावितान् विचलान् शत्रून् तडित्वेगेन् चूर्णयन्ति, स्वदेशीयान् हित्वा अतिसतर्कतया। निर्दोषरक्षणे स्थूलरक्षकैः त्रुटिसंभावना विद्यते आत्मापूर्णत्वात् ततः तद्जातासक्त्या, पक्षपातेन मृत्युभयात् च यत्कारणतः ते अनेकवारं शत्रुनिग्रहणार्थं एव अधिक्रियन्ते मारणं हित्वा, येन तैः शत्रवः केवलं कारागारे एव निक्षिप्यन्ते। न्यायालयेषु नीतेषु सम्यक्विचारणाभिः समुचितदण्डविधानेन च ते दण्ड्यन्ते। स्थूलदेशवत् एव देहदेशे अपि प्रथमरक्षापङ्क्तौ स्थिताः अर्धसैनिकबलाः सीमासुरक्षाबलाः च अल्पशक्तित्वात् सदैव छद्मरूपेण शत्रुनाशकानि विषमयानि खाद्यानि पेयानि च प्रसारयन्तः तिष्ठन्ति। चर्मधराः सीमारक्षकाः शत्रूणां शस्त्रास्त्रेभ्यः आत्मनः रक्षन्ति। ते दण्डाद्यैः स्पृष्टचालितैः तथा अश्रुवातैः, कन्करैः तीव्रजलधारादिभिः च आक्षेपणचालितैः लघुशक्त्यस्त्रशस्त्रैः शत्रून् सीमातः निवारयन्ति। अनेन अनेकाः शत्रवः मरन्ति अनेकाः च पलायन्ते। एतत्श्रेणीशत्रवः

अतिवीराः यतोहि ते सर्वान् शत्रुप्रहारान् स्वोपरि सोढ्वा एव स्वदेशीयान् रक्षन्ति। भूते अपि तीव्रास्त्रान् विहाय, एतत्केवलं पूर्णात्मबलात् एव संभवं। आत्मशक्तयः स्थूलपुरुषाः अपि आत्मबलिदानं समर्पयन्ति यद्यपि नैव सम्मुखान् अस्त्रान् हित्वा, पूर्णात्मत्वाभावात्। वास्तवेन वयं स्थूलपुरुषाः आत्मभ्रमितदेहपुरुषः एव। एषः भ्रमः शरीरविज्ञानदर्शनस्य अनवरतसान्निध्यात् शनैः-२ विधूयते।

तन्त्रेषु विभिन्नशक्तिपीठाः देवीमातुः देहांगरूपाः कल्पिताः, उदाहरणतः नैनादेवीस्थानं देवीनयनरूपम्। यथा किंचिद्विशेषभूमिस्थानानि देवीमातुः किंचिद्विशेषअङ्गतुल्यानि उक्तानि तथैव तद्भूमिस्थाने वसन्तः स्थूलपुरुषाः अपि निरुक्त्या स्वयमेव तत्समरूपे देव्यङ्गे वसन्तानां देहपुरुषाणां समतुल्याः सिध्यन्ति। एवमेव यतोहि पुरुषसूक्तानुसारं संपूर्णसृष्टिः देहरूपा अतः शरीरविज्ञानदर्शनं अपि सृष्टिवर्णकवेदपुराणानि एव अनुगच्छति। यथा पुराणेषु वर्णिताः स्थूलसृष्टिगतपदार्थाः देवासुररूपाः मनुष्याकृतयः कल्पिताः तथैव शरीरविज्ञानदर्शने अपि देहस्थाः प्राणीसदृशाः पदार्थाः देहपुरुषनाम्ना मानवाकृतयः। यथा वेदपुराणानि सनातनानि तथैव शरीरज्ञानदर्शनं अपि। यथा वेदपुराणानि प्रलयकाले सुप्तानि परं सृष्टिप्रारम्भे ऋषिभिः प्रकटितानि तथैव शरीरविज्ञानदर्शनं अपि केवलं विज्ञानप्रभवकाले एव जागृतचेतनविज्ञानिभिः पुनः पुनः प्रकटितम्।

जीवेषु चित्तवृत्तयः चिदाकाशांशरूपाः याः तद्धारकजीवैः तद्जीवनरक्षकाः अल्पयोजनाः निर्मापयन्ति। एवमेव देहपुरुषात्मा चिदाकाशः लघुसृष्टिरक्षकाः देहरक्षकाः वा महद्योजनाः देहपुरुषैः निर्मापयन्ति। पूर्णेन निर्मिताः योजनाः एव सर्वहितकारिण्यः। अल्पनिर्मितयोजनाः तु स्वार्थकारिण्यः एव। शब्दान्तरतः अल्पसच्चिदानन्दजीवः अल्पसच्चिदानन्दं देहं विस्तारयति परं असीमसच्चिदानन्दः चिदाकाशः असीमसच्चिदानन्दं सृष्टिं विस्तारयति। यथा देवाय सर्वगुणसंपन्नः सर्वतः स्वच्छः मानववदेहः परिकल्प्यते तथैव देहपुरुषाय अपि कल्पनीयः। यथा देवदेहे आत्मा एव मुख्यतमः ध्येयः तथैव सूक्ष्मपुरुषदेहे अपि। स्थूलपुरुषस्य अधिकांशकार्याणि देहपुरुषवत् अनुभवविना स्वयमेव क्रियमाणानि जायन्ते यथा हृदयस्फुरणं, अन्नपाचनं आदि अनेकानि। शेषाणि अल्पानि कर्माणि यथा मननं, निश्चयनं, ज्ञानेन्द्रियानुभवनं (दर्शनं,श्रवणं,घ्राणं,स्पर्शनं रसनं च पञ्चप्रकारानुभवाः) कमेन्द्रियानुभवनं (हस्तपादादिपञ्चप्रकारकर्मेन्द्रियकृतानि) चैव केवलं स्थूलपुरुषेण अनुभूयन्ते। एतत् आश्चर्यं यत् स्थूलपुरुषः नगण्यमात्रकर्मभिः एव बध्यते केवलं आसक्त्या। अतः सिध्यति यत् देहपुरुषः कदापि बन्धनं न लभते आत्मावरकात्मस्फुरणासंभवात्। एषा बन्धनहीनता स्थूलपुरुषाय आत्मस्फुरणहीनतया न लभ्या पुरा कृतया आसक्त्या संचिताज्ञानावरणप्रभावात् अतः तेन केवलं स्वचित्तप्रति अनासक्तिः एव एकमात्रः मोक्षोपायः अनासक्तेः तद्संचिताज्ञानप्रक्षालनप्रभावात्।

यदा विशिष्टाः प्रबलोत्साहिनः संगठितशत्रवः प्रथमोक्ते उभयरक्षाप्रणाल्यौ अतिक्रमन्ते तदा तेषु कारावासिताः शत्रवः गुप्तचरसैनिकश्रेणीम् नीयन्ते ये तत्शत्रुभ्यः तत्प्रियाणि वस्तूनि तद्वस्त्रेषु अन्वेष्य विचीय च तानि प्रचुरतया उत्पादयन्ति तथा नवनियुक्तान् गुप्तचरसेनाजातिपुरुषान् प्रशिक्ष्य तैः अपि तथैव कारयन्ति। एतदर्थं किंचिद्दीर्घकालः अपेक्ष्यते येन बहुक्लिष्टदेहसमाजाः उग्रशत्रुभिः एतत्पूर्वतया एव व्यापाद्यन्ते प्रथमोक्तैः उभयरक्षापङ्क्तिपुरुषैः प्रबलप्रयासे क्रियमाणे अपि। कदाचित् अत्यधिकतीक्ष्णबुद्धिशत्रवः तीव्रतया स्वनाशकगुप्तचरप्रणाल्या क्रियाशीलतारम्भात् पूर्वं एव संघर्षमुक्तप्रकोष्ठेषु आत्मनः गोपयन्ति उदाहरणतः अधिकारिणां वातानुकूलित-कक्षे, अतिस्वच्छोत्पादनक्षेत्रे, पर्वतनद्यादिदुर्गमस्थानेषु अन्यानेकेषु स्थानेषु च यत्र आवागमनं प्रतिकूलं। अन्ये स्वगोपने असमर्थाः शत्रवः तद्जीवितुं आवश्यकानि गुप्तवस्तूनि हस्ते गृहीत्वा इतस्ततः यत्किञ्चित् दृष्टं व्यापादयन्तः भ्रमन्ति। देहसैनिकाः दूरात् एव तान् हस्तगृहीतशत्रून् दृष्ट्वा भुषुन्डाद्यस्त्रैः निकटतया च खड्गादिशस्त्रैः व्यापादयन्ति। किंचिद्देहसैनिकाः पौराणिककालीमातासदृशाः ये शत्रून् वाहनखड्गसहितान् खादन्ति।

पुराणानां श्रवणं पुराणवाचकस्य च सान्निध्यं पठनादपि श्रेयस्करं। द्वितीयेन विकल्पेन इहलोकपरलोकयोः उभयोः परमसिद्धिः। मम पितामहः बहुमुखीप्रतिभावान् पुरोहितचर्यां आश्रितः आसीत्। सदैव परजीविकां अपहाय स्वजीविकां एव स्वयकरोत्। नित्यनैमित्तिकादिवैदिकसंध्यादिषु कर्मसु सदैव अच्युतः स्थितवान्। सः स्वमातृपुरः पुराणपठनं दीर्घस्वरेण तत्श्रवणशक्तिह्रासात् आचरति स्म। प्रेमपूर्वकात् तत्सान्निध्यात् अस्मासु अपि कर्मकाण्डविहिताः पुराणसहिताः देवपूजनसंस्काराः व्यवर्धत येन सर्वमानवीयभावाः अपि स्वयमेव उदतिष्ठन। अनेन अस्माकं भौतिकानि अध्ययनानि कर्माणि च न बाधितानि अध्यात्मक्रियासु प्रत्यक्षव्यस्तताभावात्।

एतत्तृतीयश्रेणीसुरक्षाव्यवस्था आवश्यकप्रबलसंघर्षमध्ये नागरिकदेहपुरुषहानिनिवारणेन सह उच्चमारकक्षमताप्राप्त्यर्थं एव। किंचित् चतुरशत्रवः स्वहस्तान् उत्थाप्य आत्मसमर्पणम् अपि कुर्वन्ति स्वनाशभयात् यद्यपि दूरे गते पुनः देहदेशनाशनम् आरभन्ते। किंचित्शत्रुजातयः आत्मभिः आक्रमितैः देहपुरुषैः आत्मविनाशार्थं उपयुज्यमानाः अनेकविधसंवादप्रक्रियाः अवरोधयन्ति यस्मात् सुरक्षाप्रणाली तत्कष्टेन अनभिज्ञाः तिष्ठन्ति तथा शत्रवः समस्तदेशं अंजसा एव व्यापादयन्ति तथैव यथा हिटलरशासकेन यहूदीगणाः गुप्तयातनाशिविरेषु। संपूर्णदेहदेशसहयोगेन निर्मिताः देशीयाः उपकरणानि सुरक्षाप्रणाल्यः च सर्वोत्तमाः भवन्ति यतोहि आयातितेभ्यः विदेशीयेभ्यः उपकरणप्रणालीभ्यः शत्रवः शीघ्रतया एव प्रतिरोधकताम् प्रदर्शयन्ति।

देहपुरुषमस्तिष्के मननिश्चयादिज्ञानेन्द्रियजाः खादनगमनादिकर्मेन्द्रियजाः च सर्वाः क्रियाः तदात्माधिष्ठितानुभवान् विना स्वतः एव भूयन्ते यतोहि पुरुषोत्तमेन देहपुरुषैः आसक्तिमयाचरणं न अपेक्षितं आसक्त्या तदात्मावरणजन्यस्य आत्मस्फुरणलोभजातस्य कर्तव्यच्युतेः संभावितात् परमप्रियमानवदेहासंभवत्वभयात्। अतः सः स्वयमेव देहपुरुषात्मारूपेण देहपुरुषान् पूर्णप्रवीणतया चालयति।

सैनिकपुरुषाः स्वशत्रून् नेत्राभ्यां दृष्ट्वा, कर्णाभ्यां श्रुत्वा, नासिकया तदोत्सृष्टगन्धं गृहीत्वा, जिह्व्या तेषां उच्छिष्टखाद्यजलमध्ये तत्स्वादं अनुमीय, तवचया तान् विस्पृश्य च मनबुद्धिविचारपूर्वकं स्वहस्तेषु सर्वाणि शस्त्रास्त्राणि गृहीत्वा तान् मदाप्लावितान् शत्रून् अग्रसरन्ति मुखेन च शत्रूत्साहनाशकशब्दान् उद्गीर्यन्तः शङ्खध्वनिमपि प्रसारयन्ति। ते युद्धोद्यमेन जातायाः तीव्रक्षुधायाः पूर्तये निरन्तरं अन्नजले भक्षन्तः अपशिष्टान् च उत्सृजन्तः युध्यन्तः भवन्ति। तत्र अन्तःपुरेषु क्षत्रियदेहपुरुषाः सर्वसुखसाध्यात्, कर्मक्लेशाभावात् भोजनाधिक्याच्च प्रचण्डताप्राप्तेन तद्जननांगसाहाय्येन देहदेशे जनसंख्यावर्धनावश्यकतायाः प्रेरणया निरन्तरं तीव्रवेगेन संततीं जनयन्तः तिष्ठन्ति येषु अधिकान्शाः सेनायै प्रशिक्ष्यन्ते।

कार्यसमानत्वात् पूर्णरूपेण स्थूलपुरुषैः उपयुक्तान् समतुल्यान् चित्तवृत्तीं उपयुज्य अपि देहपुरुषाः ताः न अनुभवन्ति तदनावश्यकत्वात् स्वात्मपूर्णत्वात् च। वयम् स्थूलपुरुषाः एतत्चित्तवृत्तीनां अनुभवनं निवारयितुं न अर्हामः परं देहपुरुषचिन्तनसिद्धेन अनासक्त्या अद्वैतं उपजायते यदभ्यासवशात् स्वचिदाकाशात्मस्वरूपः चित्तवृत्तिरूपैः स्वमिथ्यास्फुरणैः सह पुनः अनुभूयते। यथा मुक्तेन अनायासमेव देहपुरुषवत् आचर्यते तथैव देहपुरुषवत् आचरणेन अपि मुक्तिः प्राप्यते।

पुराणानां आश्रयणम् अपि योगतुल्यं एव। पुराणान् वयं निर्धनस्य, कर्मठस्य, गृहस्थिनः असुविधायुक्तस्य च योगम् अपि कथितुं शक्नुमः। यथा योगः अष्टाङ्गः तथैव पुराणानि अपि अष्टान्गानि। योगे संकल्पानां उत्पत्तिलयाः प्राणायामेन मुख्यतया परं पुराणे संस्कृतश्लोकशक्त्या। इन्द्रियानाश्रितानां संकल्पानां उत्पत्तिः एव तेषां लयः उच्यते। सुस्वरसंस्कृतशक्त्या पुराणकथाभिः यथा अज्ञातकथानकाः जीवन्ताः भवन्ति तथैव अनेकपूर्वजन्मेभ्यः सुप्तसंकल्पाः अपि लयार्थं। अनेन धारणा विवर्धते। योगे ध्यानसमाधिपादयोः ईश्वरसान्निध्यार्थं विशेषपृथक्प्रयासः अपेक्ष्यते परं पुराणेषु तत्प्रयासः पूर्वतया एव उपयुक्तः ईश्वराधारितकथाभिः।

देहपुरुषस्वयंवरस्पर्धा विवाहः च अतिशोभनीयौ। नवदेशविकासार्थं पितृदेशे एका सर्वगुणसंपन्ना कन्या अतिसुन्दरसुलोचनमृगनयनकृशकटिहासावलोकमधुरचितवनहस्तिचालसुवासितपरिधानकीटतन्तुशाटिकास्वर्णवर्णवलयितालकावलीरजतवर्णोद्घाटितान्गचुम्बनद्योतकरक्तवर्णबिन्दुसमूहचिन्हितमातृत्वगुणसंपन्नलज्जायुक्तहासमुखोद्घाटितश्वेतवक्षबाहूपुष्पसुवासितस्वर्णिमकलाबद्धकेशपूर्णस्वस्थदेहहस्तस्वर्णकटकपादस्वर्णनूपुरमधुरस्वमुखसंगीतानुगामीलयबद्धनर्तकदोलायमानपिहितशिखरस्तनषोडशशृङ्गार युक्ता असंख्यकन्यामध्ये परस्पर स्पर्धायां परीक्षकदलचयनोपरान्तं राजकन्यारूपेण उद्भवति। या योषित् आबाल्यकालात् सर्वोत्तमतुष्टिपुष्टिवर्धकपरिस्थितयः लभति सा एव परीक्षायां विजयति। प्रतिपलं अंगरक्षकदलसह अनेकाः सहचर्यः ताम् अनुगच्छन्ति। तस्यां विवाहावस्थायां संजातायां राजा मनोवाछितात् गुणसंपन्नात् निकटस्थात् एकान्यदेशात् अनेकान् सर्वगुणसंपन्नान् कुमारान् तद्स्वयंवरार्थं आमन्त्रयति। तेषां बुद्धिशौर्यादिगुणपरीक्षार्थं तन्मार्गे बहुविधबाधाः प्रयुक्ताः भवन्ति येन बहवः वीराः मार्गेषु एव वीरगतिं लभन्ति बहवः च विकलांगाः भूत्वा प्रायोजितायां प्रतिस्पर्धायां अंजसा एव पराभूयन्ते। किंचित्कुमाराः दुर्बलाः, श्रान्ताः, क्लान्ताः क्षुधापीडिताः च भूत्वा शक्तिह्रासत्वं अनुभवन्ति। अनेकाः जलतीर्णविद्यानभिज्ञाः नदीजले एव निमज्जन्ति। कदाचित् सघनवनमध्ये उत्पथगामिभिः व्यापाद्यन्ते। कदाचित् सर्वाधिकधावनांकलभ्याय विजयाय ते परस्परं कलहायन्ते युध्यन्ति च। अनेकाः कुमाराः मार्गभ्रमिताः सुरक्षाबलैः हन्यन्ते उग्रपन्थीसन्देहात्।

पुराणकथासु अभिप्रायः परोक्षः। योगादिविद्यासु एतत् सर्वविदितं यत् आत्मज्ञानं अकस्मात् एव उपजायते निवृत्तचित्ते,न शनैः -शनैः। चेत् चितसिन्धुः आत्मा अकस्मात् प्रकटितः तर्हि तदोर्मिः देवः किमर्थं न। एवमेव सर्ववस्तुभावानां अकस्मात्प्राकट्यविषये मन्तव्यं। अनेन एतदपि निष्कृष्यते यत् कल्पिताख्यानानि केवलं आध्यात्मिकत्वेन एव सत्यानि, नान्यथा।

अन्ततोगत्वा राजप्रासादे अपेक्षितायां अल्पसंख्यायां एव बलबुद्धिधैर्यादिगुणेषु सर्वोत्तमाः विवाहार्थिकुमाराः उपगच्छन्ति यत्र परीक्षायाः अन्तिमचरणः। तत्स्पर्धान्ते सा राजकुमारी सर्वान् विजयीराजकुमारान् मन्द-मन्दचालेन आयान्ती हास्यावलोकेन पश्यन्ती उपगच्छति। सा स्वचयनितवरवक्षस्थले एव वरमालां परिधापयति। ततः अति हर्षोल्लासेन तदोद्वाहोत्सवः परिपाल्यते यस्मिन् सर्वव्यञ्जनविलासादिसह अन्यालौकिकसुविधाः विवाहागतैः अतिथिपुरुषैः स्थानीयपुरुषैः च सज्जासंपन्नेषु चपलोल्लासेषु भवनेषु यथायोग्यं यद्यपि कैश्चित् सलालसैः अजीर्णत्वयोग्यमपि उपभुञ्जयन्ते। उद्वाहोत्सवे शान्ते भूते उद्वाहदलः प्रस्थाप्यते। तद्दलः निर्गममार्गे स्थिते पितृदेहदेशेन निर्मिते विश्रामगृहे शान्त्या किंचिद्विश्रामार्थं तिष्ठति। किंचिद्दिवसेषु देहराजपुत्रः तस्यां राजपुत्र्यां अति मनोहरं बालेन्दुसदृशपुत्रं जनयति। तत्पालनपोषणलारदुलारादिव्यस्ततया संसर्गजसुखैः च मोहितौ तौ नवराज्यनिर्माणार्थाभियानं एव विस्मरन्तौ तत्संकीर्णविश्रामगृहे एव आत्मतः त्रिवंशपीढिपर्यन्तं तिष्ठति वस्त्राभूषणोपकरणपशुवाहनसखीकिङ्करादिरीतिदेयैः वधुपक्षीयैः राजसहायतया। वधुदेशस्य सीमान्तभागे वरदेशनिकषा एकः निर्जनः प्रकृतिपूर्णः लघुप्रदेशः विद्यते यत्र तद्युवराजपरिवारार्थं एकातिसुन्दरं वातानुकूलितभवनं निर्मीयते। तत्र कन्यापितृदेहदेशेन प्रदत्तैः भोगैः आनन्दितः सः युगलपरिवारः अनेकेषु वनोपवनेषु, पर्वतेषु, सागरतटेषु, नदीतीरेषु, आश्रमतीर्थादीषु च मनोरमस्थानेषु अटन् परस्परं हास्यविनोदादिवाग्विलासैः लतादोलासु दोलयन्, पवित्रजलेषु स्तुवन्, सुगन्धितपुष्पाणि अवघृणन्, पुष्पक्रीड़ा क्रीड़न्, पर्वतेषु आरुह्यन, तिर्यक् तुषारक्षेत्रेषु संसरन्, विविधेषु चित्रविचित्रविमानेषु च सुदूराकाशे उत्पतन् तथा ज्योत्स्नापूर्णरात्रिषु रासेन विहरन् उपगच्छति।

अनेकाः धर्माः प्रकृतिं तदनुकृतिं च न पूजयित्वा प्रत्यक्षेण एव निराकारपरमात्मानम् पूजितुं प्रयतन्ते येन अविदितेन अव्यक्तः एव पूजितो भवति निर्गुणनिराकारपरमात्मनः अचिन्त्यत्वात्। अनेन अनेकविधाः अधर्माः प्रचालिताः जायन्ते। यदा आत्मसागरोर्मिना

सर्वभावपदार्थरूपप्रकृतिना मधुरसंबन्धः तदैव आत्मना सह तादात्म्यं संभवति। प्रत्येकपणकं अवघृणन् व्यक्तिः कथं धनिकः भवितुं अर्हति। एतत् विवेकबुद्ध्या सिद्धान्तः,नैव कस्यचित् विशेषधर्मस्य अनुशन्सायै।

तत्प्रासादे अनेकाः उद्वाहिताः युगलकिशोराः सुगन्धिताः पुष्पाच्छादिताः स्वर्णशय्याः अवलम्ब्य मनोवान्छितैः सर्वगुणसंपन्नैः संततिभ्यः गर्भाधानं संस्कारं नियोजयन्ति। अनेन तन्निर्जनप्रदेशे बालसुलभानि बहुसुरमयाणि संगीतमयानि वाक्यानि गुन्जायमानानि भवन्ति। राजसुलभैः भोगविलासैः प्रासादस्थैः समस्तनार्यैः अधरस्पृष्टमुखसरोजाः अङ्कस्पृष्टसरसिजदेहाः च ते बालकाः अति सुखेन कालेन किशोरावस्थायां नीयन्ते। ततः ते अपि वयोवृद्धसदृशान् देशकालातीतानन्दमयान् गृहस्थधर्मान् पूर्णतत्परतया तन्मयतया च निर्वहन्ति। अनेन राजवंशः उत्तरोत्तरवृद्धिं प्राप्नुवन् संपूर्णदेशं व्याप्नोति। तदा नवदेशसुशासनार्थं एकः सर्वाधिकोपयुक्तः राजा अपि चीयते। सः बद्धात्मा देहदेशस्य प्रचण्डचालनार्थं भौतिकप्रगतये मिथ्याहंकारस्य आवश्यकत्वात्। एतदर्थं पूर्वतः बद्धात्मानः पुरुषाः एव परीक्ष्यन्ते येषु नवदेहदेशानुसारं योग्यतासंपन्नः एव राज्याभिषेकावसरे राजसिन्हासने उपवेश्यते। मुक्ताः साधुपुरुषाः कदापि राजपदं न इच्छन्ति तद्जातबन्धनभयात् यद्यपि ते गुरुरूपेण राज्ञे सन्मार्गं सुशासनं च शिक्षितुं देहदेशराज्यभारं यदा-कदा स्वेच्छया वहन्ति अपि अहंकारत्वेन निर्लिप्तत्वेन च।

यदा पुत्रदेशः पितृदेशप्रदत्तं संपूर्णम् रिक्तस्थानं व्याप्नोति तदा सः भूमेः,साधनानां संसाधनानां च विस्तारं काङ्क्षते परं मूलदेशः पुत्रस्नेहवशादपि तस्मात् वर्तमानात् गुरुतरं सहयोगं प्रदातुं असमर्थः निजसत्तानाशभयात्। तदा नवदेशे संपीडितैः जनैः महत् जनान्दोलनम् प्रारभ्यते येन चोदितः नवदेशराजा स्वमूलदेशराज्ञः समक्षं स्वजनपीडाम् प्रस्तौति। अनेन क्षुब्धः महाराजा तं स्वदेशस्य पार्श्वभागे विरलजनस्थाने यथेच्छसत्ताविस्ताराय स्वतन्त्रजीवनयापनाय च उपयुक्तभूमिं उपलाभयति। तदा महाराजा जनसागरनिष्कासनार्थं स्वदेहदेशस्य सीमाक्षेत्रराजमार्गस्य सीमानिकषा आन्तरिकं मुख्यद्वारं अपिधातुं आदिशति। तद्द्वारात् बहिः सीमापर्यन्तं राजमार्गे बहुविधाः सुरक्षाबलाः प्रचुरतया प्रयोज्यन्ते बाह्यदेशात् उत्पथगामिनां अवैधप्रवेशनिषेधनार्थं। सुरक्षाबालानां प्रचण्डक्रियाशीलत्वात् खाद्यानि, वस्त्राणि अन्यानि च जीवनयापनवस्तूनि प्रचुरतया अपेक्ष्यन्ते यदर्थं संबन्धितक्षेत्रेभ्यः आपूर्तिकर्तृमार्गाः पूर्णतया तन्यन्ते तद्बाधाः अपसार्यन्ते च। तेषु सुगमीकृतेषु मार्गेषु अनेकविधानि वाहनानि अनेकविधैः वस्तुभिः संभृताः प्रचुरतया पलायितुं प्रारभन्ते। विशालजनसमूहस्य निस्सारणार्थं अपि महती कर्मशक्तिः अपेक्ष्यते। खाद्यानि पूर्वतः एव प्रचुरतया संसारितानि, राष्ट्रराजधान्यां मुख्यालयात् कर्मप्रेरकसंदेशाः अपि विभिन्नपदयुक्तैः अधिकारिभिः क्रमशः पुरः-पुरः प्रेष्यन्ते अन्ते च स्थानीयैः कर्मकरैः प्राप्यन्ते। एते देहराष्ट्रविभाजने उभयदेशाभ्यां महद्पीड़ाः अनुभूयन्ते। उभयदेशयोः संसाधनानां शक्तेः च गम्भीरक्षतिः जायते तथा द्वावेव मुख्यतः नवजातदेशः जीवनसंकटे उत्पथगामिभिः, दुर्घटनाभिः अन्यान्यैः च। असंख्याः देहपुरुषाः उभयदेशमनाः केनचित् अपि न आश्रयीक्रियन्ते अतः एतद्विभाजनस्य विकटयात्रायां अनेकाः उभयपक्षीजनाः नश्यन्ति।

परमाणुस्फोटनैः अद्य वैज्ञानिकैः प्रयोगैः अपि सिध्यति यत् सर्वभूताः निराकारस्य ऊर्मयः। वेदाः तन्निराकारं परमात्मानं मन्वन्ते, विज्ञानं तं ऊर्जां मनुते। अतः अद्य उभे क्षेत्रे सत्यविनिर्णये नामकथनात् एव भिन्ने,न वास्तवेन।

नवदेशे विशेषज्ञाः न विद्यन्ते अनुभवाभावात् येन तैः ज्ञातविद्याभावात् सः देशः प्रकटनोपरान्तं एव नष्टुं अर्हति चेत् मूलदेशेन न अवलंब्यते। अवलंबिते अपि कदाचित् नवजातदेशः जीवितुं न अर्हति। कदाचित् नवदेशः स्वमूलदेशप्रति शत्रुवत् आचरति। सः अस्वच्छः तिष्ठति तेन उत्पथगामिनां पोषणत्वात् यस्मात् तेन सह मिलनोन्मुखः मातृदेशः तद्रोगाणुसम्मुखः अपि भूयते। एते मिलनावसरे मातृदेशस्य अल्पापि असावधानतया तद्राष्ट्रसीमायां क्षतिग्रस्ते ते उग्रवादिनः तदाभ्यन्तरे प्रविशन्ति। ते आत्मघातिनः हिंसकाः सूक्ष्मपुरुषाः तत्र महदुत्पातान् कुर्वन्ति, अनागसनागरिकान् घ्नन्ति,राष्ट्रीयसंसाधनानि नाशयन्ति तथा अनेकविधसंरचनाः मार्गान् च विध्वसन्ति।

अद्य भारतवर्षे जीवनविधयः बहुलतया परं जीवनाभावः, संकल्पविधयः अनेकाः परं संकल्पानां अभावः, कर्मसु अनासक्तिः परं कर्माभावः, आचरणविधिनां बहुलता सदाचारार्थं परं आचरणस्याभावः, षड्दोषान् जेतुं असंख्याः अध्यात्मविधयः परं षड्दोषाणां अभावः भौतिकतानुशासनाय च अनेकाः संप्रदायाः परं भौतिकताभावः। दृढ़ाध्यात्मपन्थिभिः अध्यात्मशास्त्राणि गीयन्ते परं भौतिकता पूर्णतः त्याज्यते। पाश्चात्यदेशेषु भौतिकता गीयते परं अध्यात्मं त्याज्यते। उभये प्रकारके सभ्यते अपूर्णे। पूर्णता केवलं वैदिकोक्तेन ज्ञानकर्मसमुच्चयेन। पूर्णता केवलं आध्यात्मिकताभौतिकतासमुच्चयेन। पूर्णता केवलं तन्त्रयोगसमुच्चयेन। पूर्णता केवलं भारतीयतापाश्चात्यतासमुच्चयेन। पूर्णता केवलं जलधिवत् व्यवहारेण। पूर्णता केवलं देहपुरुषवत् व्यवहारेण। पूर्णता केवलं सर्वभावाभावानुभवनेन अनासक्त्या।

वास्तवेन देहदेशं आपन्नाः ते उग्रपन्थिनः अतितीव्राः अतिकर्मठाः च भवन्ति यद्यपि अनुचितकार्येषु एव तैः औचित्यं अनुभूयते परम्परया अधर्मावृतधर्मेण वा। तैः तत्संततीषु तदर्जितेन गुणसूत्रप्रसारेण एका क्रूरा सूक्ष्मपुरुषजातिः एव उत्पद्यते। तद्धर्मान्धस्य सन्मार्गच्युतजातेः मुख्यधारायां पुनरागमनं अत्यन्तदुष्करं। कदाचित् प्रतिकूलपरिवेषात् अवतारीसूक्ष्मपुरुषात् वा तद्जातिः समूलेन विनष्टुं अर्हति।

अनेकदा मातृदेशेन अनेकविधैः प्रेमप्रस्तावैः संधिप्रस्तावैः चापि सः कुपुत्रदेशः न सुधरति। तत्प्रति स्वमोहात् तु तं परित्यक्तुं न अर्हति नैव च योद्धुं। अधिकांशतः सः कुदेहदेशः तत्कुस्वभावात् स्वयमेव नश्यति अन्यशत्रुभिः उत्साद्यते वा परं कदाचित् तन्मूर्खता मातृदेशनाशका कदाचिच्च उभयपक्षहानिकरा। पुत्रदेशजन्मात् एव चेत् मात्रा अनवरतेन तस्मिन् समुचितध्यानं प्रदीयते तथा

तत्स्वावलंबनपर्यन्तं तत्पालनपोषणं संरक्षणं च समुचितविधिना आचरिते तर्हि एव एतद्विकटसमस्यायाः सुरक्षा। एतत् अवश्यमेव निश्चेतव्यं यत् सूक्ष्मोग्रवादिनः स्थूलपुरुषैः न अनुकरणीयाः यतोहि ते बन्धनहीनाः अतः दुष्कर्मफलमुक्ताः परं स्थूलपुरुषाः बद्धाः येन तत्कुफलभाजनाः।

स्थूलदेशे प्रथमे कार्यक्षमाणि वस्तूनि विकास्यन्ते ततः एव तत्पूर्णविकसितानि वस्तूनि संपूर्णदेशे विस्तार्यन्ते। सूक्ष्मदेशे अपि ईदृशा एव व्यवस्था भूयते। अनेन वस्तूनां विस्तारोपरान्तं तदक्षमतया संसाधनहानेः निवारणं। एवमेव असंख्याः देहदेशाः जायन्ते येषु देहपुरुषाणां पूर्णसमाजाः ईश्वरलीलामयाः प्रभवन्ति। देहसमाजः वास्तविकः ब्रह्मसमाजः। स्थूलसमाजे स्वप्ने अपि सर्वजनमुक्तिः न संभवा परं देहसमाजे स्वभावादेव सदैव सर्वे मुक्ताः पशवः अपि। प्रतिदिनं किंचिदपि शरीरविज्ञानदर्शनाश्रयेण देहपुरुषवत् अनासक्तिः किंचिदपि प्रयासं विना स्वयमेव उदेति या दिवसपर्यन्तं तिष्ठति। अद्वैतसाधना तदैव श्रेष्ठा या स्वयमेव जायेत यतोहि विचारकृतया निरन्तरसाधनया लौकिककर्माणि बाध्यन्ते अहंकारः च उदीयते। अतः अन्यथाचरणात् अल्पापि देहपुरुषाचरणं श्रेयस्करं।

कुण्डलिनीयोगे सेन्द्रियाणि अतः आसक्तियुक्तानि आत्मबन्धनकराणि च कर्माणि मेरुदण्डाधिष्ठितया नाड्या कृतानि मन्यन्ते। वास्तवेन इन्द्रियाणि मस्तिष्केन मेरुदण्डमार्गेण एव संचाल्यन्ते। एतत्विज्ञानसिद्धं यत् अनुभवहीनतया स्वयंजातानि कर्माणि मेरुदण्डेन संचाल्यन्ते यथा ऊष्णे सम्पर्के हस्तस्य प्रतिसरणं कबन्धस्य चलनं वा। आसक्त्या कृतानि कर्माणि अपि स्वयंजातानि एव कर्तुः अभावस्वरूपात्। अनेन सिध्यति यत् अनासक्त्या कृतानि कर्माणि एव मस्तिष्ककृतानि कर्तुः आत्मभावस्वरूपात्। एषा आत्माभ्यन्तरता मस्तिष्कता वा अनुभूयते अपि योगाभ्यासात् अनासक्त्या वा। एवमेव आत्मबाह्यता मेरुदण्डता वा अपि अनुभूयते भौतिकजीवनाभ्यासात् आसक्त्या वा। अतः कुण्डिलिनीजागरणम् अनासक्त्या आचरणस्य प्रारम्भः अष्टाङ्गयोगेन, स्वाध्यायेन, परोपकारेन अन्यानेकैः वा साधनैः मिश्रितैः वा। कुण्डलिनीशक्तेः ऊर्ध्वगमनं अर्थात् एतत्साधनाभिः उत्तरोत्तरविवर्धत फलं। सहस्रारचक्रे कुण्डलिनीशक्तेः पराशक्त्या मिलनं अर्थात् अनासक्तेः पूर्णतया क्रियान्वितेन आत्मानुभवनं। वयं मस्तिष्कस्थं अनुभूतं गहनचिन्तनं इन्द्रियनिरपेक्षं जागृतकुण्डलिनीसह उपमातुं अर्हामः। एतत्गहनचिन्तनं चिन्त्यवस्तुभावप्रति अनासक्त्या एव संभवं यत् पुनः स्वाध्यायीसज्जनस्य सान्निध्यात् एव संभवं अन्यथा इन्द्रियाश्रयणात् कुण्डलिन्याः पुनः अधोसरणं। एवमेव मस्तिष्कबाह्यं अनुभूतं सेन्द्रियं चिन्तनं मेरुदण्डाधारे मूलाधारे स्थितेन सुषुप्तकुण्डलिन्याः उपमातुं शक्नुमः। यावत् अनासक्तिः तावत् कुण्डलिन्याः उच्चचक्रेषु स्थितिः। मस्तिष्के उपगते मस्तिष्कस्थस्य चिन्तनस्य मात्रानुसारतः एव मस्तिष्कचक्रेषु कुण्डलिन्याः स्थितिः। किंचिदपेक्षितकालं कुण्डलिन्याः मस्तिष्के स्थिते सत्वगुणः प्रस्फुरति। तस्मिन् सत्वगुणे अपि अनासक्तिप्रभावात् अन्ततोगत्वा कुण्डलिनी सर्वोच्चचक्रे सहस्रारे प्रविशति यत्र महाशक्त्या सह तत्पुनर्मिलनं अर्थात् जीवब्रम्हैक्यं आत्मानुभवनं वा। वास्तवेन यथा सर्पिणी स्वाङ्गानि कुण्डलरूपेण संकोच्य कुण्डलिनी भवति तथैव सर्वव्यापिनी चित्शक्तिः चिदाकाशः वा अपि इन्द्रियैः आसक्त्या च संकुचिता चित्लेखापुन्जा वा भवति या कुण्डलिनी कथ्यते। इन्द्रियनिग्रहेण अनासक्त्या च एतद्चित्लेखाग्रन्थिः विग्रन्थ्यते चित्तजालः वा चित्तचञ्चलता वा शाम्यति अर्थात् कुण्डलिनी कुण्डलरूपं हित्वा पुनः लंबाकारा दीर्घाकारा स्पष्टा भूत्वा तद्वास्तविकरूपं चिदाकाशं उत्सरति।

देहदेशराजकुमारीस्वयंवरे पराजिताः परदेशीयाः वीराः निन्दाजातात्मग्लानिना देहसमाजात् बहिर्भूत्वा किंचिद्कालमेव जीवन्ति। देहसैनिकाः अपि बहून समाजबहिकुमारान् सीमान्तराजमार्गेषु तिष्ठतःअटतः स्वदेशप्रतिप्रत्यावर्ततः च शत्रून् मत्वा घ्नन्ति। बहवः निमन्त्रकदेशात् बलेन निष्कास्यन्ते परं तद्स्वयंवरस्थायाः सर्वाङ्गसुन्दरराजकन्यायाः **आसक्त्या** सास्मरणजातेन मानसिकविकारेण तन्मातृसमाजे अन्यस्मिन् वा पुनः प्रवेशे असमर्थाः समाजबहिक्षेत्रेषु सैनिकादिसुरक्षाभावात् हिंसकपशुलुण्ठकाद्युग्रपन्थिभिः व्यापाद्यन्ते।

उपरोक्तेन आसक्त्या तात्पर्यं पूर्णनिष्ठया ध्यातव्यं यतोहि एतदेव शरीरविज्ञानदर्शनस्य सारनिष्कर्षः। देहपुरुषैः वास्तवेन आसक्तिः अपि प्रदर्श्यते परं अनासक्त्या। एतदेव अध्यात्मकला। एतदेव "योगः कर्मसु कौशलं"। न्यूनतमेन इन्द्रियसाहाय्येन या आसक्तिः प्रदर्श्यते सा एव परमा अनासक्तिः परमानासक्तिजनकत्वात्। अनेन इन्द्रियाभासेन मनसि प्रबलासक्तिः उदेति। जीवनयापनार्थं एषा आसक्तिः अवान्छिता। अतः एतदासक्तिं अपकर्तुं वास्तिवका अनासक्तिः प्रारभ्यते सत्सङ्गैः योगाच्च। यतोहि मानसिकविषये एव आसक्तिः संभवति नैव सेन्द्रियविषये। सेन्द्रियविषयेषु अनासक्तिः केवलं मिथ्याचारः आत्मवन्चनं च। अग्निः दहति एव तस्मिन् जलं इव चिन्तिते अपि। यद्यपि ईदृशा सेन्द्रियानासक्तिः भौतिकप्रगतिकरा आध्यात्मिकावनतिनिवारका च परं अतिमान्द्येन आध्यात्मिकोन्नतिकरा। वास्तवेन किंचिदपि इन्द्रियसहायताविना इन्द्रियाभासविना वा मानसिकेन्द्रियविना वा अप्रत्यक्षेण इन्द्रियविना वा आसक्तिः न संभवा। एवमेव आसक्तिविना अनासक्तिः न संभवा तथैव यथा अन्धकारविना प्रकाशः न संभवति। यद्यपि प्रत्यक्षेण इन्द्रियसहायता विनाशकरा अज्ञानकारणात् अतः निवार्या परं मानसिकविषयेभ्यः अप्रत्यक्षेण सेन्द्रिया भौतिकसहायता अनिवार्या। अत्र अप्रत्यक्षेण तात्पर्यं अनहंकारतया कस्यचित् सज्जनप्रेरणात् आदेशात् वा, जगत्हितार्थं, मानवमर्यादापालनतया मध्यमार्गेण च। अग्निः दहति एव तस्मिन् जलं इव चिन्तिते अपि। अनेन एतत्सूक्ष्मा सेन्द्रियासक्तिः आत्मज्ञानपर्यन्तं तदोपरान्तं चापि बाधते यद्यपि आत्मबन्धनविना। कदाचित् विधर्मिणः एतां सेन्द्रियानासक्तिं पाखण्डं आश्रित्य अत्याचरन्ति।

स्थूलसैनिकसमूहवत् देहसैनिकाः अपि सम्मिल्य व्यूहं रचयन्ति येन तैः प्रबलाः वृहदाकाराः च शत्रवः अंजसा एव पराभूयन्ते। देहपुरुषेषु हार्दिकमिलनं अपि दृश्यते स्थूलपुरुषवत्। देहसैनिकाः हार्दिकमिलनात् एव हस्ते हस्तं गृहीत्वा पङ्क्तिबद्धरूपेण परस्परं जीवितुं सहायन्तः विशालशत्रून भाययन्ति। अनेन ते स्वविशालसत्तां दर्शयन्तः वाग्बाणैः च तद्गौरवं उद्गीर्यन्तः तदाक्रान्तृशत्रूणां हृदयानि विदारयन्ति ततः हतोत्साहितशत्रून नाशयन्ति कदाचित् खाद्यन्ति अपि च सम्मिल्य तथैव यथा सस्यनाशकवाराहं एकाकीपुरुषः भक्षितुं न अर्हन् बहूभिः पुरुषैः सम्मिलति।

देहपुरुषः स्वतंत्रः भूत्वापि परतंत्रः यथैव प्रत्यक्षेण अपि दृष्टः। सः देहदेशहिताय एव जीवति अर्थात् श्वसिति, खादति, चलति, कर्म करोति, युध्यति अन्ते च मरति। एवमेव पुरुषः अपि पूर्णतः परतंत्रः। वेदपुराणेषु अपि एतदेव वर्णितं यत् मनुष्यः नटेन काष्ठपुत्रिकावत् परमात्मना समष्टिचित्शक्तया वा संचाल्यते। पुरुषेण आत्मस्वतन्त्रता अनुभूयते मायया यद्यपि सः सृष्टिलाभार्थं एव पराशक्त्या चाल्यते। तदा किमर्थं अहङ्कारः। एतज्ज्ञानं एव अहंकारनाशनाय पर्याप्तं। यथा देहदेशे स्थूलदेशे च पूर्णतः सादृश्यता अस्मिन् शरीरविज्ञानदर्शने दर्शिता अस्ति तथैव देहदेशे सृष्टौ च पूर्णसादृश्यता विद्यते। अस्माकं बुद्धिः एतद्सादृश्यतां विश्लेषितुं अल्पसमर्था यद्यपि वैज्ञानिकाः यन्त्रैः कार्यरताः सन्ति। एतद्विवेचना श्रुतेः तत्सूक्तिना अपि सिद्धा यदनुसारं "यत्पिण्डे तत् ब्रह्मान्डे"।

कदाचित् चर्मधृतशत्रवः उदरे अपाच्याः देहपुरुषमेव नाशयन्ति तथैव यथा आमिषान्तराः विषमयकीटाः भक्षकपुरुषमेव। अमार्यशत्रुसंक्रमिते देहसैनिके उपचाररोधीभूते अन्यदेहसैनिकाः तं तथैव देहहितार्थं नाशयन्ति यथा शत्रुमिलितम् विद्रोहीसैनिकं स्थूलसैनिकाः। देहश्लेषेन देहपशवः देहसमाजात् बहिः भूत्वापि परस्परं भोजनजले विभज्य अन्योन्यसहयोगेन आत्मनः रक्षन्ति व्यूहरचनया अतः शत्रुसमक्षं अनावृतदेहन्यूनीकरणात्। एवंविधेन बहवः निकटताजातेन परस्परतीव्रसंवादेन सामूहिकतया कर्मणा च शत्रुनाशकानि प्रचण्डानि अस्त्राणि अपि निर्मान्ति यानि स्थूलपुरुषैः देहदेशराजभिः अपि स्वदेहदेशशत्रुभ्यः स्वरक्षणार्थं मुद्राविनिमयैः प्राप्यन्ते।

स्थूलदृष्ट्या देहपुरुषाः मानवतापरकस्थूलपुरुषवत् एव आचरन्ति अतः मानवीयैः जनैः देहपुरुषबाह्यरूपः स्वतः एव अनुकृतः भवति परं पूर्णरूपेण देहपुरुषस्य शरीरस्य आत्मनः च अनुकरणम् केवलं आत्मज्ञैः जीवनमुक्तैः पुरुषैः एव दृश्यते। केवलं देहपुरुषात्मानुकरणेन अपि आत्मज्ञानं उपजायते परं भौतिकावनतिः बाधते। अतः एकसार्धमेव तद्वैहिकाध्यात्मिकं अनुकरणम् एव शीघ्रतमेन सर्वविधफलप्रदं।

अधुना देहपुरुषेषु सहयोगभावना निरूप्यते। एकविशेषवंशजातिमयानि देहपुरुषमित्राणि देहदेशात् बहिः स्वतन्त्राणि तिष्ठन्ति। ते स्वतन्त्रताप्रेमिणः प्रकृतिप्रेमिणः च अतः किंचिदपि देशीयं सामाजिकं च आत्मबन्धकव्यवस्थां न स्वीकुर्वन्ति कुटुम्बं हित्वा। ते स्ववंशपरम्परया शिक्षितां स्वर्णसदृशस्य एकदुर्लभमूलपदार्थस्य निर्माणाय एकअद्भुतविद्यां आश्रयन्ति परं तद्दीनतया समुचितेन पोषणावासाभावेन अत्यल्पा एव फलप्रदा। एकदीर्घकालिकेन शपथपत्रेण तानि देहपुरुषमित्राणि देहसमाजस्य वृद्धिविकासाभ्यां अत्यावश्यकम् जगति दुर्लभं तत् पदार्थं निर्मान्ति यद्विनिमये ते देहसमाजात् राजकीयसुविधासुरक्षानिवाससह विभिन्नानि पौष्टिकानि सुपाच्यानि च अन्नानि प्राप्नुवन्ति।

प्रथमतः विषयेषु महत्त्वबुद्धिः अर्थात् मनसा आसक्तिः अपि आवश्यका। अनेन विषयेषु अवचेतनस्थसमेताः समस्ताः संकल्पाः आरोपिताः भवन्ति। विषयेभ्यः स्वदेहेन्द्रियैः अगमत्वमपि केनचिदपि कारणेन अपेक्षितम्। अनेन तेषु आरोपिताः संकल्पाः विषयानां चिन्तनेन सह पुनः पुनः जागरन्ति परस्परं अध्यस्त्वात् इन्द्रियैः अव्यवधानाच्च। परिपक्वे एषः एव पश्चातापः उच्यते। अनेन प्राक्संकल्पाः भावाः चापि तथैव भस्मीभूयन्ते यथा प्राक्पापानि। एषः सिद्धान्तः यत् संकल्पाः भावाः च प्रकटिताः इन्द्रियनिरपेक्षाः च एव भस्मीभूयन्ते नैव अप्रकटिताः इन्द्रियसापेक्षाः च। एतदेव कारणं येन पुराणेषु तथैव च शरीरविज्ञानदर्शने अपि प्राकृतवस्तुघटनासु मानवीयैः व्यवहारैः सह मानवीयभावाः संकल्पाः च प्रचुरतया संस्कृतशक्त्या प्रदर्श्यन्ते। अनेन इन्द्रियनिरपेक्षाः संकल्पाः भावसहिताः पुनः पुनः उपजायन्ते विलयनार्थमेव। एतद्विधिना लौकिकसहायतया लक्ष्यप्राप्तिसंभावना प्रबलतमा। अनेन धारणा प्रचुरतया विवर्धति। एतन्मुक्तिदे सुकाले वर्तमाने अपि इन्द्रियाणि अवमन्य केवलं संकल्पाश्रयणात् सद्गुरुसत्संगप्रभावाच्च आत्मज्ञानं संभवं। अनेन संकल्पेषु क्षीणेषु ततः चित्ते शून्यप्राये अकृत्रिमसाधकः विभीय लौकिकशिक्षकैः इन्द्रियैः बाह्यमुखः न भूत्वा अकृत्रिमसद्गुरुणा अकृत्रिमतया आश्रयन्ते। एतदकृत्रिमसत्सङ्गेन प्रेमपूर्वकेन प्रचण्डधारणा इन्द्रियैः न चोर्यते अपितु मस्तिष्के एव ध्यानसमाधिक्षेत्रयोः अवत्रति। विषयेषु संकल्पेषु भूतेषु अपि इन्द्रियाहारः एव प्रयोगात्मकः प्रत्याहारः प्रायोगिका अनासक्तिः च। विषयेषु संकल्पेषु अभावेषु इन्द्रियाहारः अनासक्तिः च नैव वास्तविका परं मूढ़ता एव।

देहपुरुषः एतत् उपरोक्तं सर्वं जीवनव्यवहारं कर्तुं समर्थः शुद्धात्मना। पुरुषः शुद्धात्मना एतादृशं कर्तुं न अर्हति तल्लौकिकसफलतायै आसक्तिमयस्य व्यवहारस्य आवश्यकतया। मानसिकविषयेभ्यः आसक्तिः चित्तवृत्तिलयकरा अर्थात् योगकरा। आसक्तिः इन्द्रियविषयेभ्यः कृता एव बन्धनकरा। एतदेव कारणात् पुराणकथाः मानसिकविषयेभ्यः एव आसक्तिजननार्थं। ताः कथाः कदापि इन्द्रियैः ताः अनुकर्तुं न प्रेरयन्ति। मानसिकायां आसक्तौ प्रचण्डे भूते इन्द्रियाणि अनिवार्याणि। पुराणैः शविदेन च एतदासक्तिः सुरक्षितस्तरे नीयते पुनः पुनः आश्रिते च तत्रैव स्थाप्यते। अनेन इन्द्रियबाधाप्रशमनं प्राप्यते। एतन्मध्यस्तरासक्तिः अनवरता एव चित्तवृत्तिलयकरा। देहपुरुषः ईदृशं सर्वं कर्तुं अर्हति शुद्धात्मना, स्वशुद्धात्मना जीवनव्यवहाराचरणसंभवात् परं पुरुषः स्वशुद्धात्मना न परं स्वचिदाकाशात्मविवर्तरूपीचित्तवृत्तिस्वरूपं अवलम्ब्य एव एतत्सर्वं कर्तुं अर्हति शुद्धात्मना जीवनव्यवहाराचरणासंभवात्, यद्यपि तेन चित्तप्रति आसक्तिः तत्शुद्धात्मस्वरूपं व्यस्मारयत। अतः पुनः देहपुरुषवत् पूर्णताप्राप्त्यर्थं अनासक्त्यनुकरणम् एव एकमात्रोपायं यत् चित्तवृत्तिभिः एव संभवं, अतः सिध्यति यत् मुक्तिः प्रवृत्तिसिद्धा एव, कदापि न निवृत्तिसिद्धा।

पादपसमाजः देहसमाजः चापि अन्योन्यं सहयोजयेते। एकविशेषप्रकारपादपसमाजपुरुषैः तन्मित्रपुरुषाः एकाकीविचरणरताः निवेश्यन्ते यद्जातप्रेमफलस्वरूपतः ते स्वमित्रार्थं भव्यभवनं सृजन्ति विनिमये च तन्मित्राणि पादपसमाजनिर्मातृपरिष्कृतपदार्थान् संश्लेषयन्ति। चिदाकाशस्य अचिदंशः केवलं जीवसमूहैः एव अभिव्यक्तिक्रियते आसक्तिप्रभावात्। जीवातिरिक्तं मनोहीनसंपूर्णसृष्टौ केवलं स्वाभाविकचिदाकाशः एव विद्यते अतः सिध्यति यत् देहपुरुषाः अपि सदैव चिदाकाशरूपाः एव मनोऽभावात् मानवतापरकत्वात् च यथा तर्कसिद्धित्वात्। केवलं तद्देहसंबन्धितजीवरूपाचिदाकाशः एव तैः रोगादिदेहाहितकरकर्माणि कारयति यथा कुत्सितराज्ञा कुप्रबन्धनात् तद्राज्यवासिनः पीडिताः भवन्ति। अर्थात् देहजगत्हानिः तन्नियन्तृजीवप्रकटिताचिदाकाशेनैव जायते। अपि चोक्तं यत्

मनुष्यकृत्यज्ञैः देवाः पुष्यन्ते ये तदा जीवान् पोषयन्ति। वास्तवेन यज्ञप्रभावेण अचिदाकाशः अर्थात् आसक्तिजातमिथ्याभ्रमः विद्रवति परहितकारितया येन तद्जातविघ्नानि अपि शाम्यन्ति अर्थात् परमदेवरूपचिदाकाशः प्रभवति। अतः सृष्टेः वास्तविककल्याणार्थं सर्वमानवाः परिष्कर्तव्याः।

चिदाकाशस्य अनेकाः सृष्टिभागनियन्त्रकाः कल्पितांशाः एव अनेकदेवताः तथा एवमेव अचिदाकाशान्शाः एव सृष्टिभागबाधकाः ये असुराः सन्ति। चिदाकाशः देहपुरुषः वा एव परमदेवता तथा अचिदाकाशः देहपुरुषशत्रुः वा एव परमासुरः इत्येतत् अपि कथितुं शक्यन्ते तेषु मनोऽभावात्। पिण्डब्रह्माण्डयोः ऐक्यात् सिध्यति यत् सदैव सर्वत्र च देवासुरसंग्रामः प्रवर्तितः विद्यते। यदा पुरुषात्मा अचिदाकाशरूपः भवति तदा सः तेन नियन्त्र्यते यत्फलतः सः कुमार्गगामी आत्महन्ता च जायते यतोहि तेन प्राणवायुः सम्यक् रीत्या न गृह्यते शरीरं च सम्यक् रीत्या न चाल्यते येन अनेकरोगाः अपि उद्भवन्ति। ऐतद्वैपरीत्यं मिश्रितं च सहजतया अवगन्तव्यं। वास्तवेन शरीरविज्ञानदर्शननामकज्ञानरूपौषधेः आवश्यकता केवलं मनसे एव विद्यते यतोहि मलिनमनरूपाचिदाकाशः एव सम्यक् प्राणवायुरोधनेन देहकार्याणि दुष्प्रभावयति, देहपुरुषः अतः देहः तु स्वयमेव सदैव च चिदाकाशस्वरूपः अतः मानवतापरकः स्वास्थ्यपरकः वा। संक्षेपेण, परमात्मा केवलं विकासं एव कारयति तत्पूर्णविकसितस्वरूपत्वात्। अवनातौ तु केवलं जीवः एव कारणं।

किंकर्तव्यविषये असीमितज्ञानभन्डारः अद्य विद्यते यस्य पूर्णप्राप्तिः असंभवा कष्टप्रदा च अतः देहपुरुषवत् समस्यानिर्दिष्टावश्यकतानुसारमेव ज्ञातव्यं आचरितव्यं च, एतदेव शविदसारं। देहसमाजः एव पूर्णसमाजः यतोहि अस्मिन् सर्वजनेभ्यः समानसुविधाः प्रापयन्ते यद्यपि तद्ग्रहणं अग्रहणं वा तदेच्छावश्यकतानुसारमेव। । अत्र निष्कर्मकजनाः अपि निर्जीविकावेतनं आप्नुवन्ति। अनेन स्वस्थदेहसमाजे सामाजिककुरीतयः न विद्यन्ते।

देहपुरुषैः भविष्ययोजनाः अपि निर्मीयन्ते यथा दुर्भिक्षकालयापनार्थं आवश्यकताधिकोत्पादितान्नभण्डारणम् भविष्यसंभावितयुद्धार्थं युद्धाभ्यसनं च। अस्मच्चित्तवृत्त्यनुगतनिर्मलता देहपुरुषात्मपरमनिर्मलतांशरूपा, सर्वानुभवप्राप्तशान्तयः तत्परमशान्त्यंशाः तथा आकाशाखण्डत्वात् सर्वानुभवाकाशाः तत्परमात्माकाशांशाः। याः स्थूलपुरुषाः अनुभवन्ति तत्सर्वस्फुरणाः प्रथमतया देहपुरुषमस्तिष्के एव उपजायन्ते परं देहपुरुषाः ताः न अनुभवन्ति तदात्मपूर्णत्वात्। स्थूलपुरुषचिदाकाशात्मनि आसक्तिजातावरणेन जडीभूते सर्वचेतनानुभवाः स्थूलाः प्रतीयन्ते तद्जडात्माकाशसूक्ष्मत्वात्। स्थूलपुरुषः देहपुरुषवत् चित्तवृत्तिजन्यानुभवान् निवारयितुं न अर्हति प्राणकर्मचित्तानुभवानां सहास्तित्वात् परं चित्तप्रति अनासक्तिसिद्धाद्वैतात्मानुभवनेन समस्तानुभवाः आत्मनः अपृथक् प्रतीयन्ते अतः तद्वत् निवारितरूपाः एव मन्यन्ते। यथा चित्तवृत्तयः स्थूलपुरुषमस्तिष्के प्रस्फुरन्ति तथैव देहपुरुषमस्तिष्के अपि उभयमध्यपूर्णसादृश्यत्वात् परं केवलं स्थूलपुरुषः एव तत्प्रति आसक्त्या बध्यते।

यथा मनसि संपूर्णक्षेत्रकर्षणरूपीध्येयं सततं विचिन्त्य अनुभवीकृषकः एकं-एकं भूमिपदं शनैः-शनैः कृष्ट्वा संपूर्णक्षेत्रं अनायासं एव कर्षति तथैव शविदसाधकपुरुषः अपि सर्वकर्माणि एकं-एकं कृत्वा देहपुरुषवत् आचरन् तत्पूर्णाचरणरूपतदात्मस्वरूपं च प्रतिक्षणं मनसि ध्यात्वा तत्स्वरूपतां अञ्जसैव प्राप्नोति। यथा कृषकबालकः स्वचञ्चलत्वात् एतद्ध्येयचिन्तनाभावात् किंचिद्पदमात्रकर्षणोपरान्तमेव पलायते तथैव शविदसाधनाहीनः अपि। यतोहि आत्मनः सर्वाधिकनिकषा वसन्तः अतः सर्वाधिकप्रियाः जीवनमुक्तेश्वराः अद्वयात्मदेहपुरुषाः अनेकसहस्रकोटिसंख्यायां सदैव सर्वत्र च देहस्थिताः एव तिष्ठन्ति अतएव ते कदापि न विस्मृयन्ते तथा तत्संगतिः सदैव उपलभ्यते, चेत् एतत्तथ्यं अवगम्यते। यथा स्थूलपुरुषस्य देहपुरुषस्य च व्यवहारकर्मणां मध्ये पूर्णसादृष्यता विद्यते तथैव तच्चित्तवृत्तिमध्ये अपि सिध्यति चित्तवृत्तिभिः कर्मव्यवहारनियन्त्रणत्वात् अर्थात् चित्तकर्मणोः परस्परसंबन्धात् परं केवलं स्थूलपुरुषः एव चित्तासक्त्या अभिभवति।

आसक्तिः द्वैतरूपा अतः बन्धनरूपा अस्ति या एव हृदयग्रन्थिनाम्ना अपि अवगम्यते। एतद्ग्रन्थिः एव प्राणवायुं अवरोधयति अतः तननं तत्फलतः च रोगं उत्पादयति। वास्तवेन कर्मवेगेन प्राणवेगः येन चित्तवृत्तयः प्रस्फुरन्ति कर्मानुसारं देहनियन्त्रणावश्यकत्वात्। यदा ज्ञानयोगे आश्रिते चित्तवृत्त्याधाररूपचिदाकाशभावनेन चित्तं नश्यति तदैव प्राणः अपि नष्टप्रायः अतिसूक्ष्मः वा भवति येन कर्माणि कर्तुं न शक्यन्ते। अतः सिध्यति यत् कर्मठगृहस्थीपुरुषाय ज्ञानयोगभिन्नः देहपुरुषाचरितकर्मयोगः एव परमश्रेयस्करः। परमार्थीपुरुषेण चित्तवृत्त्यननुभवनं न संभवं चित्तप्राणकर्मणां सहास्तित्वात् अतः सः अद्वैतयुक्तमानवीयकर्मपरकदेहपुरुषचिन्तनेन चित्तप्रति अनासक्तः ततः मुक्तः जायते।

याः कथाः पुराणेषु कल्पितदेवजीवनचर्यासंबन्धे उल्लिखिताः सन्ति ताः देहपुरुषसंबन्धे अपि चरितार्थाः। यथा शिवादिदेवाः मुक्तरूपेण मनुष्यसदृशलीलां आचरन्ति तथैव देहपुरुषाः अपि, उदाहरणतः यथा नारदमुनिः जीवनमुक्तरूपेण वार्ताः संचारयति तथैव संदेशवाहकदेहपुरुषः अपि। अनादिकालपूर्वं देहपुरुषसाहाय्येन स्थूलदेहः निर्मितः आसीत् परं तद्देहः शववत् व्यवहरत तेन देहपुरुषात्मप्रेरणया तत्स्वजनकसमकक्षजीवनचर्यानुकरणाशक्यत्वात् अतः चिदाकाशमध्ये तन्नवदेहकर्मफलादिजन्यचित्तवृत्तिस्फुरणाः मिथ्या एव प्रादुर्भवन् आकाशलेखाः इव। तत्स्फुरणामयचिदाकाशः केवलं पुरुषेण एव अनुभूयते ततः किंचित्कालोपरान्तं स्वदेहमोहजातचित्तस्फुरणासक्त्या स्वशुद्धात्मस्वरूपं विस्मरति अतः चित्तासक्तिविना अद्वैतयुक्तजीवनचर्या देहपुरुषात् शिक्षितव्या।

देहपुरुषमस्तिष्के तद्देहनियन्त्रकमनबुद्धिरूपसंवेदाः तद्देहपुरुषात्मना किंचिदपि प्रयासं विना स्वयमेव उत्पाद्यन्ते संचाल्यन्ते च अर्थात् ईश्वरस्य परमसत्तास्वरूपप्रेरणया सर्वपदार्थाः स्वसत्तावृद्धिप्रति अनायसं एव अग्रसरन्ति येन देहपुरुषादिसर्वचेतनजड़पदार्थैः सह देहपुरुषस्य अद्वैतात्मयुक्तमानवीयाचरणादिसर्वक्रियाः अपि निर्मीयन्ते। यथा स्थूलपुरुषः चेतनः तथैव देहपुरुषः अपि रूपक्रियासमानत्वात्, यद्यपि पूर्वतरः विकृतचेतनः परं देहपुरुषः शुद्धचेतनः। एतस्य कारणं एतदेव अस्ति यत् स्वदेहनियन्त्रकसंवेदाः देहपुरुषेण आत्मस्फुरणरूपेण न अनुभूयन्ते एतदनावश्यकत्वात्। वास्तवेन प्रत्येकजीवः शरीरविज्ञानदार्शनिकः अस्ति सर्वैः देहपुरुषस्वरूपप्राप्तिप्रयासात्। चेत् किंचिदनुभवः प्रताड़येत् तर्हि मानवसदृशकर्मकर्तारं परं अनुभवरहितदेहपुरुषं ध्यायेत्। अस्माभिः स्वसर्वमनोदैहिककार्याणि देहपुरुषवत् स्वाभाविकतया स्वचिदाकाशात्मस्वरूपविस्मरणविना अद्वैतात्मना वा कर्तव्याणि।

कदाचित् पुरुषवत् देहपुरुषमस्तिष्के अपि मानवताहासकमनोरोगः उद्भूयते संकेतकाणुदोषात् येन विकृतसंवेदनदेहपुरुषाः अमानवत्या आचरन्ति। कदाचित् देहपुरुषेषु रुग्णेषु जातेषु तन्मित्राणि रोगभयात् किंचित्कालपर्यन्तं देहदेशात् वियोज्यन्ते अन्यथा रोगेण हन्यन्ते देहदेशसमर्थकतन्मित्रस्य अल्पशक्तित्वात् देहसमाजे च तत्पूर्णमिलनाभावात्।

अत्रतः देहपुरुषचिन्तनं निश्चयनं च कथ्येते। देहपुरुषेण चक्ष्वादिपञ्चज्ञानेन्द्रियैः सर्वबाह्यपरिस्थितयः गृह्यन्ते ततः तत्परिस्थित्यनुसारं तन्मस्तिष्के संवेदकाणवः क्रियाशीलाः जायन्ते यदेव मनोकल्पनारूपाः येन बाह्यपरिस्थतयः अनुमीयन्ते। अन्नं अनुभूय तन्मनः बुद्धिनिर्णयं अपेक्षते अतः मनोरूपतदन्नसंवेदकाणूनां देहसत्ताप्रति प्रभावत्वेन एव अन्नग्रहणं त्यागो वा निश्चीयते यतोहि मनः बाह्यजगतः सूक्ष्मानुभवात्मकरूपं। अन्ने देहहितकरे तद्ग्रहणार्थदिशकाणवः बुद्धिः वा मनः आदिशति यदनुसारं मनः पादौ मुखं च तदन्नग्रहणार्थं चालयति, विपरीततः देहाहितकरविषाक्तान्ने अनुभूते अग्रहणार्थदिशकाणुरूपीबुद्धिः तन्मनः तन्मुखपिधानार्थं आदिशति अपि च पादाभ्यां पलायनार्थं समुचितदिशायां पादचालनेन। अनेन देहपुरुषभयमपि सिध्यति परं अद्वैतेन। अद्वैतेन कृतं किंचिदपि न कृतं; अद्वैतेन अनुभूतं, किंचिदपि न अनुभूतं। कर्मबन्धनात् मुक्तिः अद्वैताचरणादेव नान्यथा। मनोकल्पनाः तत्कल्पनाजनकवस्तुद्वाराकरिष्यमाणस्थूलप्रभावस्य सूक्ष्माभिव्यक्तिरूपाः एव सन्ति। तत्सूक्ष्माभिव्यक्तौ सत्तावर्धके तत्संबन्धितवस्तुग्रहणार्थं निश्चीयते अर्थात् बुद्धिनामककर्मेन्द्रियशासकमनादेशकसंवेदाः प्रसार्यन्ते। एतद्विपरीतं सत्ताह्रासकवस्तुविचारभावविषयेषु मन्तव्यं। कदाचित् बुद्धिभ्रमः अपि जायते यस्मिन् बाह्यवस्तुना उद्भूतमनः संपूर्णदेहसत्तावर्धकं प्रतीयते परं वास्तवेन तद्वस्तु देहहानिकरं सिध्यति यथा अन्नवृतमत्स्यपाशः तथा अर्बुदरोगस्य चतुरविद्रोहीपुरुषप्रदर्शितमिथ्यादेहहितकारिता येन ते देहसैनिकैः न हन्यन्ते। अनेन सिध्यति यत् देहपुरुषाः स्वचालितयन्त्रसदृशं आचरन्ति यद्यपि ते चेतनाः। यतोहि शास्त्रेषु अपि मुक्त्यर्थं यन्त्रसदृशाचरणं अपेक्षितं चेतनत्वेन अतः देहपुरुषाचरणं अनुकरणीयं।

यथा आत्मस्फुरणाः स्थूलपुरुषं जीवितुं प्रेरयन्ति तथैव शुद्धात्मा देहपुरुषं। अतः यथा आत्मस्फुरणा आत्मतुल्या तथैव स्थूलपुरुषः सूक्ष्मपुरुषसमतुल्यः एव। , भेदः केवलं भ्रमादेव। स्थूलपुरुषः आत्मस्फुरणाः निवारयितुं न अर्हति तैः चित्तवृत्तिभिः देहनियन्त्रणत्वात् अतः अद्वैतसुलभानासक्तिभावः एव पूर्णत्वाय देहपुरुषसमानताप्राप्तये वा एकमात्रोपायः। यथा स्थूलसमाजः स्वनियन्त्रणार्थं स्वसमाजाध्यक्षं राजानं वा अपेक्षते तथैव देहसमाजः अपि। आत्मस्फुरणलोभप्रेरितात्मा एव एतदुभयोः समाजयोः अध्यक्षः अस्ति।

यथा स्थूलसमाजाध्यक्षः समाजे उपयुज्यानि स्थूलपुरुषालक्षितानि यन्त्रोपकरणादिसमस्तवस्तूनि तत्क्रियाकलापार्थं उपलब्धिकरोति तथैव देहसमाजाध्यक्षरूपीजीवात्मा अपि देहपुरुषालभ्यानि अन्नवस्त्रादिसर्ववस्तूनि देहपुरुषव्यवहारव्यापारचालनार्थं उपलब्धिकरोति। सर्वसजीवानां केवलं देहपुरुषदेहनियन्त्रकः देहपुरुषदेहान्तर्गतसमाजाध्यक्षरूपः देहपुरुषात्मा देहजीवात्मा वा एव पूर्णमुक्तपरमात्मारूपः अस्ति, अतः भूतानां सर्वश्रेष्ठः पुरुषोत्तमः वा।

यथा सृष्टिविकासे लघुतमात्मस्फुरणा विकासं प्रारभते तथैव जीवविकासे अपि। एषा सूक्ष्मपुरुषस्य ऐश्वर्यमयीमाया एव अस्ति या निजात्मरूपशाश्वत्चिदाकाशाभ्यन्तरे असंख्यरूपाकारैः सह उत्पत्तिनाशखण्डनरहितात्माकाशखण्डाः भ्रमसहायतया मिथ्यैव असंख्यजीवरूपेण उत्पादयति, नाशयति तथा तैः अद्वैतज्ञाने प्राप्ते निजात्मनि विलापयति अपि। आसक्तिः अद्वैतं च सहवसतः, एवमेव अनासक्तिः अद्वैतं च। देहपुरुषानुवर्णनेन अस्माकं उद्देश्यं केवलं आसक्तिनाशं एव अस्ति, य

त्किंचिदपि तत्स्वरूपम् भवेत् परं एतत् परं सत्यं यत् सः चित्तेन सह अपि अद्वैतरूपः एव अस्ति, केवलं यदाचरणं एव जीवनमुक्त्यर्थं पूर्णसक्षमं। कामक्रोधादिप्रचण्डभावनानां उद्भवकाले चेत् अद्वयस्वरूपदेहपुरुषाः भाव्यन्ते तर्हि सद्यः शान्तिः लभ्यते तथा अनवरताभ्यासेन आत्माज्ञानप्राप्त्यर्थं उत्कटेच्छा प्रादुर्भवति।

देहदेशे सर्वत्र परस्परयुग्मितानि गुहामार्गजालानि विद्यन्ते। तद्गुहासु रक्तवर्णद्रव्यं प्रतिक्षणं श्रमिकदेहपुरुषसमूहेन बलपूर्वकं प्रवाह्यते यस्मिन् वाहकदेहपुरुषाः स्ववक्षान् स्वपृष्ठपेटिकाः च प्राणवायुना आपूर्य प्रवहन्तः भवन्ति। आरम्भे तानितगुहाः शनैः-शनैः उत्तरोत्तरदूरतया उत्तरोत्तरसंकीर्णाः भवन्ति सुदूरजनजातीयकठिनविकासन्यूनक्षेत्रेषु निर्माणकाठिन्यात् यत्र ते संगठितचालं विहाय पङ्क्तिबद्धरूपेण एव कठिनतया चालितुं स्मर्थाः। तत्र तद्गुहाभित्तिसह सासंघट्टनं अतः देहाघातं अपकर्तुं ते आनीतवायुं गुहाबहिस्थापणिकेषु प्रतिष्ठापयन्ति यत्स्थानात् औद्योगिकैः साधारणस्थानीयपुरुषैः च स्वावश्यकतानुसारं गुहाजालानीतान्यसर्वदैनिकोपयोगीवस्तुसह गृह्यते तथा विनिमये स्वोत्पादान निःश्वस्तवायुं च अवशिष्टैः सह प्रयच्छन्ति ये गुहायां प्रवेष्यन्ते ततः संपूर्णदेशे प्रवहन्ति। व्यर्थावशिष्टाः किंचिद्शुद्धीकरणोपरान्तं देहदेशनदीभिः नीयमानाः देशीयसीमास्पृष्टे बहिस्थसमुद्रे प्रविशन्ति। तद्व्यर्थापशिष्टपदार्थेभ्यः उपयोगीसर्ववस्तूनि शोधकयन्त्रैः परिष्करणोपरान्तं पुनरुपयोगार्थं आह्रयन्ते तथा परिवहनविभागं प्रति प्रेष्यन्ते संपूर्णदेहदेशप्रसारणार्थं। तद्गुहाजलं प्रचण्डझन्झावातसिद्धवायुपूर्णे एकजलाशये प्रविशति यत्र तद्जनाः देहदेशात् निःश्वस्तवायुं उत्सृज्य शुद्धप्राणवायुं पुनः प्रचुरतया गृह्णन्ति। ततः तद्जलं पुनः समस्तदेशनलिकासु सरति कृषिक्षेत्रेषु चापि धावति नालिकाबहिः गत्वा उन्मुक्तरूपेण यत् कृषकजनाः स्वसस्यसिञ्चनार्थं उपयोजयन्ति। समस्तोत्पादितखाद्यानि खाद्यपरिष्करणोद्योगेषु परिष्कारितानि लघुभाराणि, लघ्वायतनानि सूक्ष्माणि च भवन्ति येन तानि सरलतया एव श्रमिकजनैः साधारणासु उपर्युक्तयातायातनलिकासु प्रवेष्यन्ते। परं अत्यधिकान्नेषु उत्पादितेषु मुद्राविनिमयजीवकजनाः कठिनश्रमेण तदान्नं विशिष्टासु वाहकयन्त्रमयनलिकासु प्रवेशयन्ति याः तदा अतिभारसंयुताः प्रचुरीन्धनं दाहयन्ति। उपयोगातिरिक्तखाद्यानि भण्डारगृहेषु नीयन्ते यत्र हानिकरवातावरणात् सुरक्षितानि तानि दुर्भिक्षकालार्थं, सस्यहीनताकालार्थं सस्यन्यूनताकालार्थं च सञ्चितानि भवन्ति।

अनेकैः ब्रह्मान्डैः सत्ताप्राप्तिप्रयासः सृष्टिं निर्माति। अनेकाकाशगंगाभिः सत्ताप्रयासः ब्रह्माण्डं निर्माति। अनेकसौरमण्डलैः सत्ताप्रयासः एकाकाशगङ्गां प्रकटीकरोति। सूर्यसहानेकग्रहैः सौरमण्डलं निर्मीयते। अनेकदेशैः सत्तालोभः विश्वं निर्माति। अनेकराज्यानां सम्मिलितसत्ता एकदेशं उत्पादयति। एवमेव अनेकजनपदैः राज्यं निर्मीयते। अनेकविकासखण्डाः सम्मिल्य एकजनपदं निर्मान्ति। एवंविध अनेकपंचा यतैः एकखण्डं, अनेकग्रामैः एकः पंचायतः, अनेकपरिवारैः एकग्रामः तथा अनेकस्थूलपुरुषैः एकपरिवारः निर्मीयते। असंख्यसूक्ष्मपुरुषैः सत्ताप्राप्तिप्रयासः एकस्थूलपुरुषदेहरूपसूक्ष्मपुरुषसमाजं देहदेशं वा निर्माति। एवमेव अनेकवृहदणुभिः सत्ताप्रयासः एकसूक्ष्मपुरुषदेहं उत्पादयति। अनेकलघ्वणुभिः सत्ताशीलतया एकवृहदणुसत्ता निर्मीयते। परमाणुभिः सत्ताशीलत्वेन लघ्वणुः उत्पद्यते। असंख्यमूलभूतकणाः परस्परं संमिलन्ति ततः समन्वितेन नियन्त्रितेन च सामूहिकक्रियाशीलतया एकं सुव्यवस्थितसमाजं विरचयति यः परमाणुनाम्ना जगद्विख्यातः भवति। परमसत्तास्वरूपचिदाकाशेन आत्मस्फुरणसंभवा निजलीलामयीसत्ताशीलता असंख्यमूलभूतकणान् जनयति। एवमेव प्रत्येकसमाजघटकेन् स्वसत्तावर्धकप्रयासत्वेन स्वाधिष्ठातृसमाजसत्ता स्वतः एव वर्धते।

एतत्सृष्टौ एकसमाजं हित्वा अन्यसर्वसमाजैः सत्ताप्राप्तिप्रयासः विकासप्रवृत्तिः वा समस्तजीवनव्यवहाराः वा स्वचिदाकाशात्मस्फुरणानुभवविना एव संभूयते अतः बन्धनाभावः, अर्थात् केवलं जीवनामकस्थूलपुरुषेण एव स्वसर्वकर्मभोगाः मानसिकाः शारीरिकाः वा पूर्णरूपेण अनुभूयन्ते, स्थूलपुरुषप्रवृत्तिहेतु तदात्मस्फुरणावश्यकत्वात्। देहपुरुषः चित्ताभावसह अपि पूर्णात्मरूपः, सदैव तस्मिन् आत्मावरकासक्त्यभावात परं पुरुषः व्यक्तचित्ताभावात् आत्माभावरूपः जायते, तस्मिन् अनादिकालात् विवर्धमानासक्त्या, अतः अनासक्तिसमायोजनार्थं चित्तभावं अपेक्षते, अपि च चित्ताभावात् तेन देहपुरुषवत् मानवीयकर्माणि न क्रियन्ते येन देहपुरुषः कुपितः तं चित्ताभावपुरुषं अनादिबन्धनात् न विमोचयति। यावद्प्रचण्डः चित्तवृत्तयः, तावत्श्रेष्ठं फलं अनासक्तिभावस्य, यदेव सिद्धान्तः देहपुरुषरूपीपुरुषोत्तमहेतुबलिदानभावनायाः। अपि चोक्तं यत् कलियुगे पुरुषोत्तमप्राप्तिः सरलतमा एतद्युगे चित्तस्य प्रचण्डत्वात् अतः अनासक्तिभावधारणं एव पर्याप्तं। एतदेव सिद्धान्तः ग्रामीणजननागरिकजनयोः मध्ये मित्रतायाः गुरुसान्निध्यस्य च। एतदनुसारमेव अनासक्तिमयमनोभावापेक्षया अनासक्तिमयेन्द्रियभावाः कार्यक्षमतराः अशैथिल्यकरेन्द्रियानुभवानां प्रचण्डतरस्वभावात्। त्यागसिद्धान्तमपि परोक्षरूपेण अनासक्तिसिद्धान्तानुगामी एव। देहपुरुषानुभवहीनतातुल्यानासक्त्या नानाविधचित्तवृत्तयः शीघ्रमेव विलीयमानाः उदीयमानाः च पुनः-पुनः जायन्ते येनापि अद्वैतं ततः आत्मानन्दं अनुभूयते।

सर्वपदार्थाः स्वानुकूलं एव आचरन्ति। यतोहि सच्चिदानन्दः एव चिदाकाशस्य स्वभावः अस्ति अतः चिदाकाशतरंगरूपाः सर्वपदार्थाः अपि सच्चिदानन्दवृद्धिविकासार्थमेव आचरन्ति यत्फलस्वरूपतः सृष्टिविकासः ततः अन्ते मनुष्यजात्युद्भवः जायते। मनुष्यप्रयासेन उत्तरोत्तरसृष्टिवृद्धिविकासः प्रचुरतया अनुष्ठीयते। सर्वपदार्थानां चेतनमनुष्यनिर्माणप्रति तन्मुक्तिप्रति च प्रवृत्तिः प्रदर्शयति यत् सर्वपदार्थाः चिदाकाशरूपः सन्ति यदेव बहुभिरपि अनुभूतं। जीवतोषणेन तत्सह परमात्मा अपि तुष्यति जीवब्रह्माभिन्नत्वात्। सृष्टौ सर्वपदार्थाः स्वभावत्वेन एव विकासोन्मुखिनः स्वमूलचिदाकाशप्राप्त्यर्थं निरन्तरचलनत्वात्। निर्जीवपदार्थनिर्मिताः देहपुरुषाः अपि एवमेव आचरन् परं देहपुरुषनिर्मितस्थूलपुरुषाः स्फुरणारहितात्मस्वभावत्वेन आत्मस्फुरणासक्तिरहिताद्वयात्मस्वभावत्वेन वा न व्यवाहरन् अर्थात् देहपुरुषः जीवनमुक्तव्यवहारस्य सीमापुरुषः अस्ति जगतः विकासशृङ्खलायां, यद्यपि किंचिद्दृढ़प्रयासपुरुषाः एतादृशमुक्तव्यवहारं आचरन्तः एतत्शुभपरम्परां संपूर्णजगति वितन्वन्ति।

देहपुरुषेण अदनमपि स्थूलपुरुषसमकक्षमेव। असामाजिकाः एकाकिनः च देहदेशबाह्याः देहपुरुषाः साधुपुरुषवत् स्वयमेव दूरस्थं अन्नस्रोतं स्वपादाभ्यां उपगम्य मुखेन् स्थूलान्नं, अपक्वं पाकानन्तरं वा भक्षति। ततः तदन्नं तदोदरान्त्रेषु उत्प्रेरकसहायतया पाच्यते। अन्ने उपलब्धाः सूक्ष्मपोषकाः तद्देहेन अवशोष्यन्ते तथा अपाच्याः स्थूलाः देहहानिकरापशिष्टाः मलद्वारेण मुक्तवातावरणे उत्सृज्यन्ते, यत्र देहसमाजवत् मलनिष्कासननालिकामलशोधनयन्त्रसदृशाः यन्त्रप्रणाल्यः न विद्यन्ते, अनावश्यकत्वात्। सामाजिकदेहपुरुषाः एकविशेषपाचकश्रेणीपुरुषसमूहेन पाचितान्नस्य सूक्ष्मभागं स्वस्थाने एव वाहकदेहपुरुषैः विविधवाहनेषु आनीतं अनायासमेव जलवत् सुगमतया गृह्णन्ति, येन बहुमूल्यकालापव्ययनिराकरणं, अपि च तत्पाचनप्रणालीसह तत्संपूर्णदेहः कर्मक्लिष्टः न जायते यत्फलतः देहसमाजवृद्धिविकासार्थं पर्याप्तावसरं शक्तिं च लभ्येते। स्थूलसमाजे त्वपि एतादृशव्यवस्था दृश्यते।

चेत् देहपुरुषाः क्रियाशीलतामध्यामनस्कतया सिद्धां चिदाकाशस्वरूपतां धृत्वा पुरुषसमतुल्यकर्माणि कर्तुं अर्हन्ति तर्हि देहपुरुषसमतुल्यकर्मकर्तारः पुरुषाः कस्मात् न? चेत् पुरुषाः देहपुरुषसहसमस्तप्राकृतिकवस्तुवत् मनोहीनतया आचरितुं न सक्षमः तर्हि गृहस्थपुरुषाः कस्मात् ज्ञानं धर्मं च अन्धानुकुर्वन्तः विपरीततया अनुकुर्वन्तः वा अमनस्काः भवन्ति अनासक्तिस्वभावं हित्वा, यतोहि अनासक्तान्तःकरणम् एव युगपत् मुक्तिभुक्तयोः एकमात्रोपायः। देहपुरुषात्मनि अन्धकारः लेशमात्रमपि न विद्यते, तदनासक्तिसिद्धात्मप्रकाशानावरणत्वात्। देहपुरुषः श्वसनरूपेण प्राणवायुं स्वनासाभ्यां अनायासमेव तथा सदैव आवश्यकतानुसारमेव पूर्णरूपेण गृह्णन्ति अनासक्तिसिद्धशाश्वतचित्तत्वात् अर्थात् चिदभावासंभवात्, अपि च तेषु अनासक्तेषु अनियमितश्वसनाभावात्, यतोहि अनियमिताः, स्तंभिताः अपूर्णाः च श्वासाः आसक्तेषु एव प्रस्फुरन्ति येन अनेकरोगाः अपि उद्भवन्ति।

कदाचित् वायुप्रदूषणात् देहपुरुषाः शुद्धवायुं न लभन्ते। किंचित्प्रदूषणं स्वाभाविकतया तथा किंचिन्मात्रं राजदुश्चरितेन उपजायते। कदापि देहदेशराजा देहदेशस्य क्षणिकलाभार्थं धूम्रोद्योगानि प्रचुरतया चालयन्ति येन विषमयधूम्रजन्याः कर्करोगहृदयाघाताद्यनेकरोगाः देहपुरुषान् व्यापादयन्ति अपि च एतद्रोगेषु महामारीरूपेषु जातेषु संपूर्णदेहदेशः एव विनश्यति। नाशसम्मुखदेशं अनुकुर्वन्तः अन्यदेशाः अपि प्रभाव्यन्ते अन्ते नश्यन्ति च। एवमेव जलप्रदूषणं अपि देहदेशस्य अतिक्रियाशीलतया विकृतोद्योगानां च सहोत्पादेषु देहदेशनदीषु प्रवाहितेषु उद्भूयते येन असंख्यदेहपुरुषाः जलजनितरोगैः म्रियन्ते तथा अतिभूतेषु संपूर्णदेहदेशः अपि विनश्यति। ध्वनिप्रदूषणेन अपि देहदेशाधिकारिणः अवसादग्रस्ताः येन तन्मानसिकक्रियाशीलता क्षीयते यत्फलतः तैः देहदेशसुसंचालकाः नीतयः न निर्मीयन्ते, परिणामतः देहदेशावनतिः तथा नाशः अपि चेत् अनियन्त्रितः। देहदेशे भूमिप्रदूषणं अपि जायते अतिक्रियाशीलतायां समुचितनिष्कासनप्रणाल्याभावाच्च। वास्तवेन यदा स्थूलदेशवत् देहदेशे अपि कृत्रिमता आश्रीयते देहदेशस्य बद्धात्मराजानः अतिक्रियाशीलतया, तदैव प्रदूषणसमस्या प्रस्फुरति। यथा राजा तथा प्रजा लोकोक्त्यनुसारमेव देहदेशप्रजा अपि प्रदूषणकारी जायते। एतदतिक्रियाशीलता शविदशास्त्रस्य समुचितपरिशीलनं विना एव जायते। अपि च समुचितपरिशीलनविना एव क्षीणक्रियाशीलता अपि उत्पद्यते मनोस्तंभनमोहात्। प्रतिक्षणवर्धमानात्मावरणं केवलं प्रतिक्षणजागरूकतया देहपुरुषवत् एव नश्यति।

देहपुरुषस्मरणप्रभावात देहदेशावश्यकताः पूरयितुं स्वतः एव प्रयासः जायते येन संपूर्णदेहः स्वस्थः तिष्ठति। यद्यपि पुरुषोत्तमः देहपुरुषवदेव पुरुषाचरणं तदात्मस्फुरणराहित्येन अतः बन्धनहीनतया विधातुं समर्थः आसीत् परं सः तदात्मस्फुरणया आत्मानन्दवृद्धिप्रयोगं अनुष्ठितवान्, यद्यपि किंचित्प्रबुद्धपुरुषान् हित्वा अधिकांशपुरुषालस्येन यः असफ़लप्रायः एव अभवत्। पुरुषोत्तमप्रयासः सफलं करणीयं देहपुरुषाद्वयस्वरूपानुकरणात्। यतोहि देहपुरुषः स्वजीवने कदापि मिथ्यारूपेण चित्तप्रदर्शितसच्चिदानन्दोर्मिप्रति आसक्तः न भवति अतः स्वसंपूर्णसच्चिदानन्दघनात्मस्वरूपं न विस्मरति। चित्तवृत्तिनिवारणप्रक्रिया देहस्य अन्तर्बाह्यमानवीयकर्मनिष्पादनं दुष्प्रभावयति अतः जीवननाशसंभावना चित्तप्राणकर्मणां सहास्तित्वात्, परं चित्तवृत्तयः पूर्णात्मस्वरूपात् निष्कासयति, यद्यपि देहपुरुषवत् अद्वैतजनितासक्त्या तदनुभवनं पूर्णात्मस्वरूपे प्रवेशयति। अनेन योगादिसाधनानां

समाधेः च अतिमहत्त्वपूर्णता सिध्यति। संस्मरणादिव्यर्थमनोकल्पनाः अपि मुक्तिकराः चेत् विवेकविचारसिद्धाद्वैतेन शविदचिन्तनेन वा अनुभवेयुः यदेव पौराणिककथानामपि सिद्धान्तः।

यदा उत्पथगामिभिः अतिक्रियाशीलैः पुरुषैः स्थूलजगत् आक्रम्यते तदा स्थूलदेशे अतिक्रियाशीलैः पुरुषैः सैनिकैः च स्थूलदेशज्वरः उद्भूयते तदतिरजोगुणमयदुष्टपुरुषनियन्त्रणार्थं ततः जगन्नाशनिवारणार्थं। अग्न्युत्तेजितास्त्रशस्त्रैः अपि स्थूलदेशतापमानं वर्धते। पूर्णतः एवंविधेव देहजगति अपि ज्वरः उद्भूयते, तस्य विकर्मकसूक्ष्मशत्रुभ्यः स्वरक्षणार्थं। यथा आसक्त्या अनियमिताः लघवः च श्वासाः प्रवाह्यन्ते तथैव नियमितैः दीर्घैः च श्वासैः अनासक्तिः उपजायते, यदेव प्राणायामसिद्धान्तः। सर्वसांसारिकजीवाः अनासक्ताः ब्रह्मस्वरूपाः च मन्तव्याः, तद्देहपुरुषसादृश्यात्। ब्रह्मनिष्ठैः देहपुरुषैः वा अपि एवमेव दृश्यते।

देहसमाजे आदेशोऽपि बाह्यरूपेणैव विद्यते, आदेशकर्तुः आदेशस्वीकर्तुः च आत्मस्वरूपच्युत्यभावात्। वास्तवेन वयं सदैव सर्वत्र च देहपुरुषसदृशाः पूर्णात्मस्वरूपाः अतः आत्मस्फुरणाभिः चित्तवृत्तिभिः कीदृशः मोहः सागरस्य स्वतरङ्गमोहवत्, अतः असिद्धः, यद्यपि एतत्स्फुरणाः अत्यावश्यकाः स्वपूर्णात्मस्वरूपस्य पुनः स्मारकत्वात् चेत् देहपुरुषवत् अद्वयस्वरूपेण अनुभवेयुः। यथा आत्मस्वरूपस्थितित्वात् संपूर्णासक्तिः विधूयते तथैव अद्वयात्मदेहपुरुषभावनालभ्यानासक्त्या आत्मस्थितिः प्राप्यते अतः देहपुरुषाः सदैव ध्यातव्याः।

अनेकैः दर्शनैः धर्मैः च अलौकिकाः पुरुषाः कल्पिताः ये देहमुक्तरूपेण कर्मठाः यथा हिन्दुदेवाः, बौद्धडाइटीस इस्लामक्रिस्चिअनऐन्जल्साद्याः। परं एतत्तथ्यं शरीरविज्ञानदर्शनेन एव प्रमाणितं यत् अलौकिकपुरुषाः जीवनमुक्ताः देहपुरुषवत्।

देहपुरुषैः किंचिदन्नं शुष्करूपेण मुखेन गृह्यते परं अधिकांशखाद्यानि ते जलीयमिश्रणरूपेण पिबन्ति। पुरुषवदेव जलं ते भोजनसह देहदेशान्तर्गतसर्ववस्तुपरिवहनार्थं, मलमूत्रनिष्कासनार्थं,देहतापनियन्त्रणार्थं,देहाकारस्थैर्यार्थं अन्यानेककार्यार्थं च पिबन्ति। सर्वाधिकनिकषा वसन्तः तन्त्रज्ञाः देहपुरुषाः अनेकसहस्रकोटिसंख्यायां सदैव देहस्थिताः एव भवन्ति तथा पुरुषजीवनं प्रतिक्षणं संभावयन्ति अतः परमप्रियाः यत् ज्ञात्वा पुरुषाः तान कदापि न विस्मारयन्ति। जलं बिन देहपुरुषाः मृत्युं उपगच्छन्ति। अधिकांशमलं स्वेदमूत्रवत् जलमिश्रितरूपेण तथा किंचिद्घुलनशीलं ते शुष्करूपेण अपि मलद्वारेण उत्सृजन्ति। बहवः देहपुरुषाः यथा खाद्यपरिवाहकाः, सैनिकाः शिल्पकाराः च सर्वत्र अटन्तः सर्वाणि स्वविशिष्टानि कर्माणि आवश्यकतायुक्तेषु विभिन्नस्थानेषु एव कुर्वन्ति। विद्रोहीपुरुषाः अपि अटनं आश्रित्य संपूर्णदेहदेशे विद्रोहं प्रसारयन्ति, एवमेव आक्रान्तारः अपि।

पुरुषांगवत् देहपुरुषांगानि अपि समतुल्यरोगैः ग्रस्यन्ते। उदाहरणतः सर्वोच्चाधिकारिणां मस्तिष्के रोगग्रस्ते देहदेशस्य क्रियाशीलता विक्रियते क्षीयते च। देहपुरुषजठरे रोगग्रस्ते देहपुरुषाः विशेषतः उद्यमिनः अशक्ताः भवन्ति येन संपूर्णदिहदेशः संसाधनहीनः अतः अन्यदेशैः मानमर्दितः तिष्ठति। देहपुरुषदेहे अपि पुरुषदेहवत् सर्वांगानि प्रतिक्षणं विघट्यमानाः तथा भोजनतत्वैः आपूर्यमाणाः भवन्ति यत्प्रणालीदोषाः अपि उभयस्थानयोः समानरूपेण भूयन्ते ततः च चिकित्स्यन्ते। देहपुरुषदेहे अपि देहरक्षकाः प्रतिक्षणं आक्रान्तॄन् शत्रून् च मारयन्ति यत्प्रणाल्यपि दोषसंभवा पुरुषवत्।

एतदाश्चर्यं यत् समस्तकर्मसु, गुणेषु रूपेषु च पूर्णतः समानेषु अपि पुरुषः एव स्वचित्ते अर्थात् स्वगुणरूपकर्माहंकारे निमग्नः अनन्तचित्तं अर्थात् अनन्तगुणरूपकर्मस्वरूपशुद्धात्मानं विहाय स्वमनोदैहिकेषु गुणरूपकर्मनामकात्मांशेषु बद्धः भवति परं देहपुरुषः पुरुषसमतुल्येषु एतेषु आत्मांशेषु अनासक्तः तिष्ठन् अनन्तकोटिसूर्यतुल्यभासमानं स्वात्मानं न जहाति।

बौद्धदर्शनानुसारं प्रतिक्षणं मानसिकजागरूकता आवश्यका मुक्त्यर्थं परं एषा अनुभवरूपदेहपुरुषस्मरणात् एव सर्वसुलभा व्यावहारिकतया। एवमेव अद्वैतवेदान्तसिद्धान्तोऽपि अप्रयोगात्मकः एव चेत् देहपुरुषवत् स्वजीवने न आचर्येत।

प्रत्येकपुरुषवत् प्रत्येकदेहपुरुषः अपि सर्वविधगुणकर्मरूपग्रहणे समर्थः परं देशकालावश्यकतानिर्धारितेकविशिष्टगुणरूपकर्मणि एव दक्षः भवति कर्मविभाजनसिद्धोत्कृष्टमानवताविकासार्थं। दैहिककर्मसह चित्तवृत्तिरूपाणि मानसिककर्माणि अपि स्वयमेव उद्भूयन्ते प्राणोपलब्धित्वात् अतः कर्मसु क्रियमाणेषु चित्तवृत्तयः रोद्धुं न शक्यन्ते परं तत्प्रति अनासक्त्या एव क्रमिकात्मशुद्धिः उपजायते। चित्तवृत्तयः वास्तवेन देहनियन्त्रकात्मस्फुरणरूपाः एव सन्ति अतः आवश्यकाः परं केवलं अनासक्त्या एव मुक्तिकारकाः अन्यथा बन्धनकारिण्यः। यदैव वयं कर्मपरकदेहपुरुषस्य अनुभवहीनताम् स्मरामः तान् आचरामः च तदैव तीव्रप्रकाशमयचित्तवृत्तयः उद्भवन्ति येन सिध्यति यत् पूर्णमनोनाशसिद्धा पूर्णानुभवहीनता भावाभावादिगुणातीतता वा चिदाकाशरूपता एव अस्ति। अनासक्त्या आस्वादितजगत् एव अनास्वादितजगद्रूपं यदेव देहपुरुषोत्तमाय अर्पणयोग्यं अनास्वादितदेवप्रसादवत्।

स्थूलसृष्टौ चिदाकाशस्य मिथ्याभासितक्रमिकविकासेन एकदेहपुरुषः उद्भवति यः एव देहसृष्टेः मूलाधिष्ठाता अथवा देहसृष्टेः ब्रह्मा कथ्यते। स्वपितृचिदाकाशविशालताप्रेरणया सः अनवरतश्रमेण विकसन् विवर्धन् च अद्वैतज्ञानसंपन्नश्रमप्रधानसंततीः जनयति ये पुनः तत्समानरीत्या आचरन्ति। एवमेव उत्तरोत्तरवृद्ध्या एकः मुक्तकर्मठदेहपुरुषसमाजः उद्भवति यस्मिन् सर्वपुरुषाः परस्परं वस्तुसेवासंप्रदानेन सहयुज्यन्ति। एतद्देहसृष्टिः किंचिद्कालं स्थित्वा ततः भौतिकविकासेन चिदाकाशप्राप्तिरूपं ज्ञानं न लब्ध्वा स्वविलयं आरभति चिदाकाशस्वरूपं च पुनः प्राप्नोति। यद्यपि पुरुषः अपि एवमेव आचरति परं द्वैतेन, विपरीततः देहपुरुषः अद्वैतज्ञानस्वरूपपूर्णचिदाकाशात्मानं कदापि न विस्मृत्य केवलं द्वैतनाटकं एव प्रदर्शयति यदेव शिक्षणीयम्।

विभिन्नप्रकाराः संवेदनारूपाः मानवीयभोगाः यथा दृश्याः, श्रव्याः, चिन्तनीयाः, स्पर्शणीयाः लेढव्याः च एकसार्धमेव अनुभूतव्याः, कटककुण्डलसुवर्णाद्वैतसंबन्धादितर्कविचारसह तद्वदेव च रूपाकारमिथ्यात्वभावनासह। अनेनापि अद्वयदेहपुरुषस्वरूपप्राप्त्यर्थं सहयोगः प्राप्यते। निस्सन्देहः एव देहपुरुषस्वरूपप्राप्त्यर्थमेव तदंशरूपाः चित्तवृत्तयः प्रदत्ताः सन्ति यद्यपि तत्स्वरूपे प्राप्ते अपि यावदवधि अयं देहः तिष्ठति तावदवधिः चित्तवृत्तयः अपि प्रस्फुरन्ति अतः चेत् बद्धाय चित्तवृत्तयः देहपुरुषस्वरूपप्राप्तिसंभवजीवनमुक्त्यर्थं तर्हि मुक्ताय सर्वजनोपदेशार्थं स्वात्मबन्धननिवारणार्थं च यतोहि मुक्तेनापि विवेकविचारविना आसक्तिपूर्वकचित्तवृत्त्याश्रयणम् पुनः बन्धनकरं।

वास्तवेन शास्त्रेषु वर्णितः विवेकः साधारणजनैः अप्रयोगात्मकः पठनरूपः वा एव अवगम्यते। किंचित्कुशाग्रबुद्धिजनाः चेत् इमं गूढरूपेण अवगच्छन्ति तर्हि ते एतस्य व्यावहारिकविधिं न जानन्ति। देहपुरुषस्य शविदस्य च विचारः एव वास्तविकः, प्रायोगिकः

शीघ्रफलदायी च विवेकः अस्ति।

वास्तवेन देहपुरुषबाह्यरूपः केवलं पुरुषदेहसह तद्सादृश्यतासिद्ध्यर्थमेव वर्णितः अस्ति। अस्माकं मूलोद्देष्यं तु केवलं देहपुरुषात्मस्वरूपप्राप्तिः एवास्ति। यथा एक बालकः स्वसमकक्षबालकेन सह एव प्रगाढ़तमया मित्रतया तदात्मस्वरूपं सहजतया एव प्राप्नोति तथैव शरीरविज्ञान दार्शनिकः अपि स्वसमतुल्यदेहपुरुषसह प्रगाढ़तमसंबन्धेन देहपुरुषात्मस्वरूपं अंजसैव लभति। देहपुरुषोपासकः स्वजीवनकाले देहपुरुषसायुज्यतां प्राप्नुवन् देहावसानकाले स्वचित्तवृत्तीषु शान्तासु देहपुरुषसारूप्यतां अर्थात् चिदाकाशरूपतां प्राप्नोति। चेत् कर्माणि देहपुरुषवत् पूर्णतत्परतया क्रियन्ते तर्हि प्राणकर्मसह स्वतोस्फुरितचित्रविचित्रचित्तवृत्तिप्रति स्वतः एव अनासक्तिः उपेक्षा वा उद्भूयन्ते ताभिः कार्यबाधकत्वात् येन केवलमात्रं गुणवत्तायुक्तकर्म अपि स्वयमेव अनासक्तिमूलकं एव सिध्यति।

यथा मानवसमाजे सर्वमानवाः स्वसत्ताः वर्धयन्तः परोक्षेण स्वसंपूर्णसमाजसत्तां अपि वर्धयन्ति तथैव देहपुरुषदेहस्थाः समस्ताणुपरवाणवः अपि स्वसत्ताः उत्थापयन्तः स्वसमाजरूपीदेहपुरुषसत्तां उत्थापयन्ति ये पुनः स्वसत्तावर्धनेन देहपुरुषसमाजरूपीस्थूलपुरुषदेहसत्ताम् वर्धयन्ति। यथा स्वसर्वदेहपुरुषैः अन्ने खादिते पुरुषः अपि अन्नं खादति तथैव स्वाणुभिः अन्ने खादिते देहपुरुषः अपि अन्नं खादति। एवमेव यथा समस्तपुरुषैः अपशिष्टेषु उत्सृष्टेषु पुरुषसमाजः अपि अपशिष्टान निष्कासयति तथैव सर्वदेहपुरुषाणुभिः उत्सृष्टेषु देहपुरुषः तथा समस्तदेहपुरुषैः उत्सृष्टेषु पुरुषः अपि उत्सृजति। देहपुरुषदेहः प्रोटीननामकबृहदणून् स्वदेहनिर्माणार्थं उपयोजति मुखेन् खादति वा। प्रोटीननामाणुः अमीनोअम्लनामकसूक्ष्माणून् खादति। अमीनोअम्लाणुः कार्बनहाईडरोजनौषजननत्रजननामकचतुष्प्रकारपरमाणून् खादति ये पुनः उत्तरोत्तरसूक्ष्मतायाः अनन्तपरम्परया अन्ततः चिदाकाशभक्षकमूलकणान् खादन्तः पुष्यन्ति। यथा स्थूलसमाजे पुरुषैः वायुजलादिसाधारणतत्त्वेषु उपयुज्यमानेषु बाह्यवातावरणात् किंचिदपि प्रयासविना स्वतः एव तानि न्यूनजातानि तत्वानि समाजे प्रविशन्ति तथैव देहपुरुषसमाजे अपि, परं यथा स्थूलसमाजे भोजनाद्यन्यसमस्तजटिलवस्तुनां आयातनिर्यातरूपीगत्यर्थं समाजनियन्त्रकः राजारूपीसमाजाध्यक्षः वा नियुज्यते तथैव देहपुरुषसमाजे अर्थात् देहपुरुषे अपि यः डीएनएनाम्ना अभिधीयते। पूर्णतया हास्यविनोदादिसर्वसामाजिकसंबन्धव्यवहारनिर्वहनस्य सर्वश्रेष्ठोपायः व्यवहारकाले पूर्णसम्मिलनं तथा कालान्तरे तद्जातद्वैतस्यअद्वयदेहपुरुषभावनेन निवारणं एव अस्ति।

अधुना सृष्टिदेहः कथ्यते। संपूर्णसृष्टिदेहः ब्रह्माण्डदेहान् खादति अर्थात् असंख्यब्रह्मान्डाः सृष्टिदेहं निर्मान्ति। ब्रह्माण्डदेहः असन्ख्यान आकाशगङ्गादेहान खादति। आकाशगङ्गा असंख्यसौरमण्डलानि खादति। सौरमण्डलं सूर्यं ग्रहान् च खादति। सूर्यः ग्रहाः च अनेकविधानि तत्त्वयौगिकमिश्रणानि खादन्ति। अनेकविधयौगिकमिश्रणानि अनेकविधतत्त्वानि खादन्ति। अनेकविधतत्त्वानि हाईडरोजननामकमूलतत्त्वं खादन्ति। हाईडरोजनतत्त्वं प्रोटोनादिमूलकणान् खादति। सूक्ष्मतममूलकणः आकाशात् आकाशं खादति। अर्थात् मूलतमकणः स्फटिकलेखावत् आकाशभित्त्यावृतः आकाशबिन्दुरूपः आकाशतरङ्गरूपः वा एव अस्ति आकाशाखण्डत्वात्। आकाशः चिदाकाशं खादति। वास्तवेन भोजकः भोज्यात अभिन्नः अर्थात् यत्किञ्चिद्सर्वं चिदाकाशः मूलभोज्यः वा एव। एतद्ज्ञानं तथाकथितनिर्जीवजगति स्वयंभुवं शाश्वतं च, तर्हि कस्मात् निर्जीवजगतप्रति उपेक्षाभावना अद्यतने ?

समस्तसृष्टिः चिदाकाशलेखाविलासः बाह्यतः यद्यपि केवलं चिदाकाशः अन्ततः आत्मना वा। केवलं सजीवजगत् एव चिदाकाशात्मलेखारूपं स्वचित्तं अनुभवति यद्प्रति आसक्त्या एव तत् स्वशुद्धचिदाकाशात्मस्वरूपं विस्मृत्य प्रतिक्षणपरिवर्तनशीले दृष्टे बाह्यजगति परिमुह्यन् पर्यटति तथा कदाचित् दुखितः कदाचित् च सुखितः भूत्वा मोहमायाबद्धः इति कथ्यते। अपाच्यवस्तूनि सर्वदेहैः स्वदेहात बहिः उत्सृजयन्ते यथा उदाहरणतः सौरमण्डलदेहहानिकराः अपाच्याः वा धूमकेतवः शीघ्रमेव देहात् बहिः उत्सृज्यन्ते।

यथा चलचित्रसदने चलचित्रं पश्यन्तः दर्शकाः तद्दृश्यानां प्रगाढ़ानुभवनार्थं सदनप्रकाशं शमयन्ति तथैव पुरुषचिदाकाशात्मा स्वोपरि आरोपितस्य आत्मातरन्गारूपीमिथ्याजगतः प्रगाढ़ानुभवनार्थं स्वात्मप्रकाशं विस्मरति येन जगदासक्तिः उद्भूयते येन पुनः उत्तरोत्तरात्मविस्मरणं चक्रवत्। पुरुषेण कालान्तरे प्रयासे कृते आत्मा पुनः स्मृयते। अतः पुरुषैः एतादृशेभ्यः उपरोक्तेभ्यः जीवनमुक्तपुरुषेभ्यः अद्वैताचरणं शिक्षितव्यं मृत्युंजयाय। यथा देहपुरुषस्था गुणसूत्ररूपीबुद्धि पुरुषस्य सर्वान्गानां सर्वदेहपुरुषाणां च कर्मसह निवासस्थानं पूर्णसटीकतया निश्चिनोति तथैव देहपुरुषान्तःस्थितानां अङ्गानां अङ्गनिर्मातृघटकानां च अपि, येन विलक्षणस्थूलपुरुषः प्रादुर्भवति।

वयं सत्ता प्राप्तये नानाविधान जगदासक्तिजनकान आत्महन्तृप्रयासान अनादिकालात् आचरन्तः आस्म परं अधुना देहपुरुषवर्णकशरीरविज्ञानदर्शनरूपः आसक्तिहन्तृप्रयासः अतिसुलभः शाश्वतसत्तार्थं विज्ञानप्रसादात्। शरीरविज्ञानदर्शनं सर्वधर्मसमभावपक्षधरवत् चिदाकाशप्राप्तये रचिताः सर्वमानवीयविधीन अनुमोदयति यतोहि देहपुरुषाः स्वयमपि मानवत्या चिदाकाशरूपाः एव सन्ति। देहपुरुषः कदापि आत्मच्युतः न भूत्वा सदैव समरूपः एव अस्ति परं यदा तद्प्रतिरूपः स्थूलपुरुषः चित्तवृत्तिरहिते चिदाकाशात्मप्रकाशमध्ये चित्तवृत्तिरूपां आत्मस्फुरणां आसक्त्या अनुभूय समताच्युतः विषमः वा भवति तदैव सः पुरुषः उच्यते यस्मिन् आत्मप्रकाशः विलुप्यते तथा आत्मनि घनान्धकारः आच्छाद्यते परं चित्तवृत्तयः प्रचन्डरूपेण भासमानाः प्रतीयन्ते केवलं आत्मान्धकारसापेक्षतया नैव वास्तविकतया। एतदाश्चर्यं यत् क्षणजीवनचित्तवृत्तिनां प्रचन्डतरभासनार्थं दयनीयपुरुषः शाश्वतानन्दरूपात्मप्रकाशतां जहाति।

किंचित्शत्रवः देहपुरुषवेषभूषाधृतः प्रत्याक्रमद्भ्यः सैनिकेभ्यः रक्ष्यन्ते। किंचिद्शत्रवः स्ववस्त्रगृहान्शादिचिन्हानि संपूर्णदेशे प्रसारयन्ति सैनिकान वञ्चितुं। किंचिद्शत्रवः शस्त्रास्त्ररोधीकवचान धारयन्ति। किंचिद्शत्रवः देहपुरुषगृहेषु प्रविशन्ति सुरक्षार्थं भोजनार्थं च परं कालान्तरे स्वपोशणासहायकदेहपुरुषगृहाय दाहाग्निं अर्पयन्तः यदैव भोजनार्थं गृहात् निस्सरन्ति तदैव देहसैनिकैः दृश्टेषु हन्यन्ते, अपि च तेषु पुनः गृहाभ्यन्तरे पलायितेषु संपूर्णगृहमेव उत्साद्यन्ते तत्र तद्जनसन्ख्यावृद्धिनिवारणार्थं। ततः क्षतिपूर्त्यर्थं सभ्यनागरिकैः नवदेहपुरुषैः सह एव तद्गृहाणि अपि तीव्रवेगेन उत्पाद्यन्ते तद्देशस्थैर्यार्थं। अनेन सिध्यति यत् देहसैनिकेषु हिन्सकेषु भूतेषु अपि ते देहदेशेन न हन्यन्ते तद्हिन्सामध्यसन्निहितया देहदेशसेवाभावनया अतः तद्प्रतिदृढ़विश्वासेन परं देहदेशरीतिभिन्नाः देहशत्रवः सदैव शन्तित्वेनापि हन्यन्ते तैः संभावितेन विश्वासघातेन। अतः एतत्स्पष्टं यत् देहजनेषु विश्वासाविश्वासभावने अपि विद्येते। किंचिद्गृहीतशत्रवः कारागारे स्वनिक्षेपणम् बाधन्ते स्वार्जितविद्यया।

सैनिकैः अतिकृते किंचिद्देशभक्ताः देहपुरुषाः विद्रोहिणः भूत्वा देहसैनिकैः सह देहपुरुषनागरिकान् अपि व्यापादयन्ति स्वलघुशक्तित्वात् समुचितसैन्यप्रषिक्षणाभावाच्च। किंचिद्कारागारनिक्षिप्तशत्रवः स्वनाशं अपकुर्वन्ति विशेषविद्यया। ते विद्रोहीदेहपुरुषाः अपि शत्रुवत् हन्यन्ते तैः समाजहितकरनियमोल्लन्घनतया। तेषु मारितेषु देहशासकः अतिसतर्कः भूत्वा स्वसैनिकैः सह स्वसर्वकर्मचारिणः कठोरतया नियन्त्रयति येन निर्दोषप्रजा पुनः दुखी न भवेत्, भविष्ये देहजनान्दोलनम् अपाकर्तुं च। विपरीततः आन्दोलने सफ़ले भूते अराजकता उपजायते येन उत्पथगामिनः संपूर्णदेहदेशं उत्सादयन्ति यदोपरान्तं नवचिन्तनयुक्ताः नवजातदेहपुरुषाः ऊर्जितस्फूर्तित्वेन विकासोन्मुखिनः भूत्वा नवदेहदेशं शीघ्रतया एव पुनरुत्थापयन्ति।

देहपुरुषवत् द्वैते अपि अद्वैतं एव अनासक्तिः उच्यते अर्थात् द्वैतजनकपरिस्थितीषु अपि ते अद्वैतरूपाः एव तिष्ठन्ति यदेव शिक्षणीयं। अद्वैतभावे अनासक्तिः न संभवा अनासक्तये आसक्त्यावश्यकतात्वात् तथा आसक्तये वैशिष्ट्यावश्यकतात्वात्, अतः आसक्तियुक्ताद्वैतम् अनासक्तियुक्तद्वैतं च उभये अद्वैततुल्यमेव यद्यपि उत्तरपक्षः श्रेष्ठतरः। एतदेव शरीरविज्ञानदर्शनसिद्धान्तस्य मूलवाक्यं। पूर्णद्वैतेन गृहस्थचर्या न संभवा पुरुषेण अतः अनासक्तिमयद्वैतं एव ज्ञानकर्मसमुच्चयः शविदस्य तथा अस्य पराकाष्ठा एव देहपुरुषस्वरूपप्राप्तिः जीवनमुक्तिः वा परमफलं वा। "योगः कर्मसु कौशलं" एतदोक्तिः देहपुरुशवत् अनासक्तिकौशलार्थे। उत्सहाश्चर्यादिभावनाः, कामादिशडदोषाः यत्किंचिदपि च चिरस्थायिन्यः प्रचन्डभावनाः आत्मविषमतां जनयन्ति परं देहपुरुषात्मस्मरणेन एताः एव आत्मसमतां उत्पादयन्ति तदद्वैतप्रभावात्।

देहपुरुषत्वं कदापि चित्तवृत्तिहीनत्वम् नास्ति यतोहि देहपुरुषमस्तिष्के प्रतिक्षणं तद्देहनियन्त्रकाः अनेकाः अभिक्रियाः चित्तवृत्तयः वा उद्भूयमानाः भवन्ति, अतः देहपुरुषता अनासक्तिरूपता समात्मरूपता वा अद्वैतात्मरूपता वा एव।

देहपुरुषे संक्रामकरोगाः अपि उद्भवन्ति। पुरुषवत् ते अपि चर्मणा,मुखेन नासिकया च जीवाणुविषाणुसंक्रमणं प्राप्नुवन्ति। विषाणवः तद्देहजीवनतत्वैः स्वसन्ख्यां वर्धयन्तः संपूर्णदेहे च प्रसरन्तः तद्देहं स्वसन्ततिभिः पूरयन्ति ये तत्सर्वांगान् क्षाययन्ति। अन्ते तद्देहे छिद्राणि निर्मीय पन्क्तिबद्धरूपेण शनैः-शनैः बहिः निर्गच्छन्ति अथवा तद्देहस्फोटनेन एकसार्धमेव समूहरूपेण पलायन्ते, अन्यान् देहपुरुषान् संक्रमन्ति च। अपि च अनेकदा संक्रमितदेहपुरुषैः अन्यदेहपुरुषेषु सतर्केषु कृतेषु ते तानन्यान् पुरुषान् संक्रमितुं न अर्हन्ति, तत्सतर्कपुरुषैः पथ्यपालनात्। किंचित्सूक्ष्मजीवाः रोगाणुरोगकराः देहपुरुषाभ्यन्तरे तद्देहरक्षकप्रणालिभिः हन्यन्ते शेषाः च जीवितदेहपुरुषाः चिकित्सकदेहपुरुषैः चिकित्स्यन्ते परं कदाचित् चिकित्साकर्मत्रुटिना किंचिद्रोगीदेहपुरुषाः अपि म्रियन्ते। संभावितरोगप्रतिकारार्थं चिकित्सकाः वैक्सीननामकरसायनमपि उपयोजयन्ति। कदाचित् देहपुरुषान्तरंगविकृतिना तद्हस्तौ पादौ चापि विकृतौ भूत्वा सः विकलाङ्गः भवति। वास्तवेन उपरोक्तरोगान् देहपुरुषाः आत्मना न अनुभवन्ति अनुभूय वा आसक्ताः न भवन्ति अतः पूर्णात्मस्वरूपात् अपतिताः ते शुद्धबुद्धस्वरूपाः एव तिष्ठन्ति।

पुरुषनिर्वाचनवत् विषाणुनामकदुष्टा परं प्रियदर्शना शत्रुजनजातिः केवलं एकविशेषप्रकाररुचिकरदेहपुरुषान् एव आक्रमते अन्यान् श्रेष्ठान् अपि हित्वा। देहराजकुमाराः अपि अन्याः हित्वा केवलं एकविशेषां सौन्दर्यादिगुणसमूहसम्पन्नाम् निजतुल्यराजकुमारीं एव विवहन्ति प्रबलासक्त्या अन्याः विजातीयाः गुणशीर्षाः अपि हित्वा। एकः देहसमाजः अन्यदेहसमाजजनान् न आश्रयति चेत् ते स्वार्थकराः न भवेयुः स्वजनप्रत्यासक्त्या परजनप्रतिघृणया च, यद्यपि केवलं मानवताहितार्थमेव। उपरोक्तैः तथ्यैः सिध्यति यत् पुरुषैः अपि आत्मना अनासक्तैः अघृणैः च तिष्ठद्भिः मानवताहितार्थम् स्वजीवनचर्यायां आसक्तिः घृणा चापि लीलया एव दर्शनीये देहपुरुषवत्। वास्तवेन पुरुषैः अपि देहपुरुषवदेव आसक्तिघृणादिसर्वभावनाः प्रदर्श्यन्ते परं केवलं पुरुषाः एव एताभिः प्रभाव्यन्ते भावनानामकचित्तवृत्तिरूपात्मस्फुरणाप्रति आसक्त्या। अतः एतत् निश्चेतव्यं यत् पुरुषस्य प्रत्येकक्रियाकलापः तद्देहनियन्त्रकमस्तिष्काभिक्रियाभिः सह एव संभवः याः एव आत्मस्फुरणां मिथ्यारूपेण प्रदर्शयन्ति तथा यत्प्रति आसक्तिः एव बन्धनकारणा, नैव आत्मस्फुरणारहितबाह्यकर्मसु आसक्तिः संभवा। विपरीततः देहपुरुषक्रियाकलापात् उत्पन्नः तन्मस्तिष्कगतः तद्देहनियन्त्रकः विद्युत्स्पन्दः देहपुरुषात्मस्फुरणां न जनयति अथवा जाते अपि देहपुरुषेण न अनुभूयते,अतः तदासक्तिजातबन्धनस्य कोपि न प्रश्नः। यद्यपि पुरुषः आत्मस्फुरणाः निवारितुम न समर्थः आत्मस्फुरणस्य गतिप्राणकर्मादिसजीवगुणानां च सहास्तित्वात् परं सः तत्प्रति निरपेक्षः अनासक्तः वा तु स्थातुं एव अर्हति यदेव केवलं मुक्त्यर्थं पर्याप्तं। शास्त्रीयोपायतः चिदाकाशात्मा ध्यातव्यः येन चिदाकाशात्मस्फुरणाः चित्तवृत्तयः व निष्प्रभाविण्यः अनुभवेयुः येन चापि देहपुरुषाद्वैतस्वरूपप्राप्तिः।

पुरुषवदेव देहपुरुषानामपि एका निश्चितायुसीमा विद्यते यदुल्लन्घ्य ते म्रियन्ते। यथा विभिन्नश्रेणीपुरुषाणां विभिन्नायुसीमाः विद्यन्ते तथैव विभिन्नश्रेणीदेहपुरुषानामपि। पुरुषांगवत् देहपुरुषांगाः अपि कालेन क्षतिग्रस्ताः जायन्ते, ततः ते स्वाभाविकप्रक्रियया स्वतः एव पूर्यन्ते अपि च तेषु अपूरितेषु क्षतेषु ते विशेषज्ञचिकित्सकैः चिकित्स्यन्ते। रोगेभ्यः, दुर्घटनाभ्यः युद्धेभ्यः च असन्ख्यदेहपुरुषाः पूर्णायुषः पुरा एव विनश्यन्ति। ते बाल्ययौवनवृद्धावस्थासह अन्याः सर्वावस्थाः पूर्णतः पुरुषवदेव यापयन्ति। बाल्यावस्थायां अकर्मकाः बहुभोजनभक्षाः च भूत्वा स्वशरीराणि उन्नयन्ति। किशोरावस्थायां विवाहं आश्रित्य स्ववन्शं उन्नयन्ति। युवावस्थायां वंशवर्धनात् विरक्ताः विभिन्नविद्यासु प्रशिक्षितेषु विशेषज्ञताक्षेत्रकर्मसु संलग्नाः देहसमाजं उन्नयन्ति। वृद्धावस्थायां क्षीणकर्मशीलाः भवन्तः अन्ते म्रियन्ते श्वपाकैः च दह्यन्ते। पुरुषैः एतद्विभिन्नावस्थाः मन्त्रोच्चारणयुक्तैः अनेकैः विधिविधानैः सह वर्धाप्यन्ते परं देहपुरुषैः नैव यतोहि देहपुरुषाः पूर्णमुक्ताः, अतः सर्वावस्थाभिः अप्रभाविताः तिष्ठन्ति येन ते विधिविधानरूपान् आत्मबन्धनशिथिलिकरोपायान् न अपेक्षन्ते सन्यासीवत्। एतदपि संभवं यत् देहपुरुषाः सदैव चिदाकाशरूपाः एव तिष्ठन्ति। आवश्यकप्रवृत्तिमध्ये अपि पुनः-पुनः चिदाकाशात्मस्मरणप्रभावात् येन ते प्रवृत्तिजन्यात्मावरणदोषात् अप्रभाविताः तिष्ठन्ति अतः सर्वप्रवृत्तयः तैः चिदाकाशात्मस्फुरणरूपाः एव अनुभूयन्ते। उपरोक्तकारणेन स्वदेहे नष्टे अपि ते आत्मना न म्रियन्ते आत्मचेतनायाः शाश्वत्जागृतित्वात् परं पुरुषाः चिदाकाशस्फुरणरूपचित्तप्रति आसक्त्या चिदाकाशात्मचेतनतां विस्मृत्य देहाश्रिताः आत्मतरंगरूपाः एव तिष्ठन्ति, अतः आत्माधिष्ठिताः अनेकाः रूपाकाराः चित्तवृत्त्यवस्थाः अनुभूय अन्ते देहे मृते म्रियन्ते अपि।

एके काले चिदाकाशः एव सत्तावानः चित्तं एव वा, नोभे एकसार्धं, यतोहि चिदाकाशस्फुरणस्य सत्यसिद्धिः चिदाकाशस्य असत्यसिद्धौ एव निहिता तथा एवमेव चिदाकाशस्य सत्यसिद्धिः चिदाकाशस्फुरणस्य असत्यसिद्धौ एव सन्निहिता। चित्तानासक्तिः एव चिदद्वैतरूपता

चित्तासत्तारूपता वा, अतः आसक्तिरहितचित्तत्वप्राप्तये अर्थात् इहलोकपरलोकोभयसिद्धये शरीरविज्ञानदर्शनं आश्रयणीयं। वयं सर्वे देहपुरुषाः एव स्मः ये शुद्धात्मस्वरूपं विस्मृत्य आत्माधिष्ठितं चित्तं एव अनुभवामः केवलं सृष्टिरूपीतद्देहपुरुषेच्छापूर्त्यर्थं। अतः शनैः-शनैः देहपुरुषोत्तमांशग्रहणेन्, भौतिकतया अपि च आध्यात्मिकतया तत्स्वरूपप्रति पलायन्तः स्मः, येन सिध्यति यत् वयं पुरुषोत्तमस्य परमान्धभक्ताः अतः तत्परमप्रियाः। देहपुरुषभावनं अस्मान् आश्वासयति यत् चित्तवृत्तिबन्धनविना अपि महत्कार्याणि कर्तुं शक्यन्ते। बौद्धानुमतं साक्षीभावनम् अपि शविदचिन्तनमेव, यतोहि अद्वैतं विना साक्षीभावनं न संभवति।

देहपुरुषाः विशेषतः तत्सैनिकाः चित्तविना चित्तासक्तिविना वा मांसमपि खादन्ति। देहसैनिकाः तु शत्रून् अपि खादन्ति। औषधनिद्रादिकृतां न्यूनतमचित्तवृत्त्यवस्थारूपिण्यां मदिरामपि देहपुरुषाः आस्वादयन्ति परं तद्जाताव्यक्तानुभवविना तदव्यक्तप्रति आसक्तिविना वा व्यक्तप्रति अनासक्तिप्रभावात्। यथा पुरुषाः शनैः-शनैः विकसन्तः अनेककोटिवर्षेषु स्वदेहस्य पूर्णविकसितं अवस्थां प्राप्नुवन्ति तथैव देहपुरुषाः अपि। देहनियन्त्रकचित्तवृत्तीनां नाशः एव मृत्युः तथा तद्पुनरुद्भवनं एव पुनर्जन्म। यतोहि देहपुरुषः अनासक्तिप्रभावेण चित्तवृत्तिरूपः एव न भवति अतः चित्तवृत्तिनाशे तन्नाशरूपमृत्युः कथं संभवेत। मृत्योः अभावे कथं पुनर्जन्म। विपरीततया पुरुषःस्वचित्तप्रति आसक्त्या स्वशुद्धस्वरूपं विस्मृत्य चित्तरूपः एव भवति अतः चित्तनाशे स्वमृत्युं तथा तत्पुनर्भावे स्वपुनर्जन्म बारम्बारं अनुभवति।

चेत् देहसमाजे देहपुरुषजनसंख्या न नियन्त्र्येत तर्हि परस्परसम्मर्देन निवासस्थानभोजनप्राणवायुजलाभावेन समस्तदेहपुरुषाः रुग्णाः भवेयुः मृयेयुः च यत्फलतः देहसमाजनाशेन पुरुषास्तित्वं न संभवेत ईश्वरेच्छां विरुद्ध्य परं एतन्न संभवति यतोहि देहसमाजे त्रुटिरहिताः जनसंख्यानियन्त्रणप्रणाल्यः विद्यन्ते येन तत्संख्या तत्स्तरे एव स्थाप्यते यत्स्तरे अधिकतमः देहपुरुषविकासः अतः देहविकासः संभवेत।

देहपुरुषसंगठनं जगद्विख्यातं। सर्वदेहपुरुषाणां सुसंगठितकर्मभिः एव जटिलदेहसमाजः संभवः। श्रमिकपुरुषवत् बहुसन्ख्यकाः श्रमिकदेहपुरुषाः यदा बलं प्रयोजयन्ति तदैव देहसमाजे वस्तुसेवायातायातं सुचाल्यते नैव अल्पसन्ख्यकैः देहपुरुषैः प्रयुक्तबलेन। एवमेव यदा अनेकादेशकदेहपुरुषनिर्मिताः आदेशकसंगठनं उत्तरोत्तरपदत्वेन किंचित्कर्मार्थं आदिशति तदैव आदेशः सुपाल्यते यतोहि एकेन अल्पसंख्यकेन संगठनेन वा प्रदत्तादेशस्य उल्लन्घनसंभावना अधिका निम्नकोटिकर्मसंभावना वा। देहसमाजे इच्छामृत्युः अपि विद्यते, कदापि न आत्महत्या मुक्तत्वेन। यदा विरलतमाः देहपुरुषाः स्वदेहसुधारकप्रणालीः अतिक्रम्य अपन्गाः जीवाणुसन्क्रमिताः वा जायन्ते तदा जीवितुं असमर्थाः ते स्वदेहान् स्वेच्छया त्यजन्ति सन्यासीनां इच्छामृत्युवत् देहसमाजहितार्थम् यद्यपि वास्तवेन ते आत्मना जन्ममृत्युरहिताः पूर्णसच्चिदानन्दघनरूपाः एव तिष्ठन्ति। कदाचित् विरलतमेषु आत्मबद्धपुरुषेषु अपि ईद्दशा एव प्रवृत्तिः द्दश्यते परं ते जगदासक्तेः प्रभावात् स्वशुद्धात्मस्वरूपं विस्मृत्य जगत्प्रति मुह्यमानाः जन्ममृत्युसद्दशाः अनेकाः क्लेशप्रदाः आत्मावस्थाः अनुभवन्ति।

यथा प्रत्येकजीवाय स्वसमतुल्यस्वभावमित्रं एव रोचते तथैव देहपुरुषोत्तमाय अनासक्तिपूर्णपुरुषः एव सर्वाधिकं रोचते। अनेन सः स्वपथानुगामिने मित्रपुरुषाय स्वास्थ्यकर्मठतादिनिजदैहिकगुणान् तथा षडदोषहीनता, सदात्मतोषता, अजातशत्रुता जीवनमुक्ततादि च निजात्मगुणान् च अनायासमेव उपलाभयति। देहपुरुषाः अपि पुरुषवदेव एकान्तं प्रशन्सन्ते। देहसैनिकाः वाहनचालकदेहपुरुषाः च स्वजनकनगरात् बहिः निस्सरन्तः संपूर्णदेशं व्याप्नुवन्ति तथा तत्र अधिकमात्रायां उपलब्धेन अन्नजलप्राणवाय्वादिप्रभावेण पुराकालिकसम्मर्दप्रभावात् विसृष्टशक्तेः पुनः संचयेन अधिकाः कार्यक्षमाः भवन्ति। एवमेव युद्धे पूर्णे देहसैनिकाः अन्यैः एव मार्गैः एकान्तमयैः मनोरमैः विहरन्तः सीमाक्षेत्रात् देहदेशमध्ये विनिवर्तन्ते। एतत् ज्ञातव्यं यत ते सम्मर्दमध्ये अपि आत्मनः न स्खलति अर्थात् हानिः केवलं देहाय एव, आत्मने न। अतः एषः जीवनमन्त्रः वेदोपनिषदवर्णितः देहपुरुषेभ्यः शिक्षितव्यः यदनुसारं पुरुषः स्वदेहहितार्थं स्वसमाजहितार्थम् च पूर्णनिष्ठया आचरेत् परं आत्मना अविचलः तिष्ठेत। स्थूलपुरुषाः अहंकारावेशिताः आत्मनः एव कर्ताभोक्ता मन्वन्ति परं यदा ते स्वप्रतिरूपान् निरहंकारान् देहपुरुषान् पश्यन्ति तदा तेषां अहङ्कारः विधूयते।

देहपुरुषविद्रोहः जगद्विख्यातः पूर्णतः पुरुषविद्रोहतुल्यः निम्नप्रकरणेन वर्ण्यते। कदाचित् देहसमाजे दरिद्रता प्रसरति समाजाध्यक्षस्य जीवात्मनः आलस्येन येन सर्वे देहपुरुषाः कुपोषिताः,विषाक्ताः क्षीणाः च जायन्ते। बहुकालपर्यन्तं ते देहसमाजहितार्थम् स्वदेहदेशदुर्दशां अनिरीक्षन्तः स्वविहितकर्माणि तत्परतया आचरन्ति येन उत्तरोत्तरक्षीणाः जायन्ते। अनेकाः देहपुरुषाः अकालमृत्युमुखापन्नाः अशिक्षानाजीविकारोगकुपोषणदुर्घटनाद्यापदकारणैः निजसंबन्धिनां निजबालानां च मृत्योः मूकदर्शकान् इव तिष्ठन्ति। एतावति परिस्थितौ भूते अपि प्रबलशारीरिकमानसिकतनावान् सहन्तः ते स्वाधिष्ठातुः देहसमाजस्य निर्दिष्टकर्तव्यानि निर्वहन्ति परं तान् प्रति अत्याचारः तदैव पराकाष्ठां उल्लन्घयति यदैव तत्समाजाध्यक्षादेशेन वा तद्दीर्घसूत्रतया वा तददूरदर्शितया वा तेषां किंचित्समूहः निरन्तरं प्रताड्यमानाः भवन्ति। बहुकालपर्यन्तं ते स्वमनोदेहप्रताडनाः सहन्ते परं स्वसहनशक्तौ उल्लन्घितायां तद्देहपुरुषसमूहः क्रोधितः भूत्वा देहदेशसह तदध्यक्षजीवात्माप्रति विद्रोही भवति अतः देहसमाजनाशार्थं प्रयत्नं प्रारभते। तद्विद्रोहीसमूहपुरुषाः छलेन देहसमाजोद्धारकं अभिनीत्वा समस्तदेहपुरुषान् वञ्चन्ति तथा तैः स्वसेवां कारयन्ति, अपि च तेषां सर्वाणि संसाधनानि स्वहितार्थं उपयोजयन्तः तीव्रतमेन वेगेन स्वसन्ततीः च जनयन्तः तान् विद्रोहप्रवर्धनार्थं संपूर्णदेहदेशे प्रसारयन्ति। ते किंचिदपि कार्याणि न कुर्वन्ति प्रचुरतया निरन्तरतया च संततिजननपोषणव्यस्तताजातकार्यादक्षत्वात्। । स्थूलविद्रोहिणः तावत् तीव्रतया वान्छितया स्वसन्ततीः जनयितुं न अर्हन्ति अतः अन्यान् पुरुषान् अपि विद्रोहप्रसारणार्थं प्रेरयन्ति येन ते अपि कार्यदक्षतां विस्मरन्ति। एवमेव मूलाधाराः समाजहितकराः कर्मठजनाः सेवासंसाधनाभावैः क्षीयन्ते म्रियन्ते च। बहवः विद्रोहिभ्यः व्यापाद्यन्ते। देहसैनिकाः पूर्वमेव देहसमाजस्य कुव्यवस्थया क्षीणाः, विद्रोहिभिः सह संग्रामे क्लान्ताः श्रान्ताः च भूत्वा शीघ्रमेव पराभूयन्ते। अनेकदा सैनिकानां महद्प्रयासेन सर्वे विद्रोहिणः देहपुरुषाः व्यापाद्यन्ते तथा कदाचित् औषधिरूपाणि विशेषाणि राजास्त्राणि अपेक्ष्यन्ते। अनेकदा सुपोषणव्यायामयोगप्राणायामादिभिः देहसमाजसुधारकविधिभिः विद्रोहीजनाः पूर्णसुधारं प्रति आश्वास्यन्ते तथा मुख्यधारायां विनिवर्त्यन्ते। उपरोक्तेषु उपायेषु अकृतेषु असफ़लेशु वा देहाध्यक्षेण सह देहसमाजः शीघ्रमेव विनश्यति यद्यपि तत्समाजसह विद्रोहीजनाः अपि नश्यन्ति। पश्यत तान् मूर्खान् विद्रोहीदेहपुरुषान् ये क्षणिकसुखार्थं चिरकालिकं सुखकारकं स्वाधिष्ठातारं देहसमाजं विनाशयन्ति। वास्तवेन देहपुरुषाः आत्मरूपेण न तु क्रोधिताः विद्रोहिणः

च भवन्ति तथा नैव मूर्खाः सन्ति अपितु केवलं बाह्यरूपेणैव क्रोधमूर्खताविद्रोहितादिसमस्तान् अभिव्यक्तिभावान् अभिनयन्ति। आत्मरूपेण ते निश्चलायां परमानन्दायां अवस्थायां एव तिष्ठन्ति मनोऽभावात् अतः आत्मच्युत्यसंभवात्। वास्तवेन पुरुषवदेव तन्मस्तिष्के तद्देहनियन्त्रकाः अभिक्रियाः प्रतिक्षणं क्रियाशीलाः परं ते तदनुभवप्रति आसक्तिरहिताः एव तिष्ठन्ति अतः तेषु मनोऽभावः प्रकारान्तरतः। मनः कश्चित् आत्मपृथग्वस्तु नास्ति अपितु आत्मस्फुरणरूपजगत्प्रति आसक्त्या उत्पन्नं। द्वैतमेव मनोभावरूपं तथा एतद्विपरीततः अद्वैतमेव मनोऽभावरूपं। परमज्ञानं एतदेव अस्ति यत देहपुरुषाः चित्तानुभवहीनरूपाः वा अचिदाकाशरूपाः वा न सन्ति यतोहि ते अन्तरात्मना वेदसिद्धजगदात्मस्वरूपवत् चित्तवृत्त्यनुभवाधाररूपाः चिदाकाशानुभवरूपाः एव सन्ति जगद्वत् मनोभावाभावात् परं चित्तमयपुरुषसह पूर्णसादृश्यात् ते चित्तयुक्ताः अपि सिध्यन्ति यद्यपि चित्तानासक्तरूपाः एव अनुमीयन्ते, येन अपि स्थूलपुरुषसदृशा सजीवता तथा जगदात्मवत् ब्रह्मरूपता एतौ उभयगुणौ युक्तियुक्तौ तेषु समुचितौ सिद्धौ। चेत् ते चिदाकाशात्मरूपाः भवेयुः तर्हि वयम् अपि तत्संगप्रभावात् चित्तस्फुरणारहिताः चिदाकाशरूपाः भविष्यामः येन अस्मासु संकल्पाभावः यतः जगदभावः जीवनाभावः वा अतः देहपुरुषाः अद्वैतभावनया चित्तस्फुरणयुक्ताः चिदाकाशात्मरूपाः एव मन्तव्याः। अनेन सिध्यति यत् सर्वान् मानवीयान् भावयन् अपि अद्वैतनिष्ठा एव शरीरविज्ञानदर्शनं। अद्यतने आसक्तिरोगः संक्रामकरोगवत् सर्वत्र परिव्याप्तः अतः अस्य निर्मूलनार्थं प्रबलप्रयासः अपेक्ष्यते। अविद्यमानवस्तुप्रति अर्थात् जगत्प्रति निष्ठा आसक्तिः उच्यते तथा विद्यमानवस्तुप्रति अर्थात् देहपुरुषप्रति निष्ठा प्रेम उच्यते। जगत् अविद्यमानं एव अस्ति अस्य देहपुरुषरूपचिदाकाशात्मोपरि कल्पितांशस्वरूपत्वात् सहैव पुरुषेण च चित्तवृत्तिप्रति आसक्त्या सह।

देहपुरुषस्य खननकर्मणि वर्णिते एकघटनां स्मरामि। बहुविधैः हासोल्लासैः धनिनः देहदेशस्य राजकुमारस्य उद्वाहः क्रियमाणः आसीत्। वरवधुमिलनम् राजमार्गमध्ये एव एके लघुनि यद्यपि सुन्दरे प्रासादे आयोजितं आसीत्। ताभ्यां पितृप्रदत्ताः सुविधाः पर्याप्ताः आसन् तत्र। सुविधासु क्षीणासु तद्युगलं स्वकिंचित्पुत्रपुत्रीसह पितृदेषेन निर्दिष्टं एकं निर्जनं लघुसीमाप्रान्तं प्रति प्रस्थितं अभवत्। सुरक्षाकर्मिणः संपूर्णदेहदेशे परिव्याप्ताः भवन्ति सदैव अतः कोऽपि भयः देहदेशे न विद्यते दुर्लभघटनाः हित्वा। तन्निर्जनप्रदेशे किंचित्क्षुधातुरः सः परिवारः अचंभितः यद्यपि उल्लसितः आसीत् जनहीनं निर्मलं विकाससंभवं स्थानं प्राप्य। श्रमिकाभावेन कथं गृहनिर्माणम्, कथं मार्गनिर्माणम्,कथं सस्यक्षेत्रनिर्माणम् कथं च कूपादिनिर्माणम् समभविष्यत्। तर्हि एव अहं पश्यामि यत् तत्परिवारः पितृदेशेन पूर्णतः प्रशिक्षितः तेन शिक्षितया रसायनविद्यया एकं विशिष्टं मृदाघोलकरसायनं निर्माति येन सः परिवारः एकतया दृढ़तया च परिश्रमन् तन्निर्जनप्रदेशे वाहनयोग्यमार्गानि, जलकूपानि गृहाणि च निर्मान्ति। तत्प्रदेशे श्वासार्थं पर्याप्तवायुः अपि नासीत्। तद्युवराजपरिवारः वनवृक्षरोपणमपि पूर्णया निष्ठया विदधाति फलतः च प्रचुरतया प्राणवायुं उपभुङ्क्ते। यद्यपि निर्माणपदार्थानि पितृदेषात् एव आपूर्यन्ते तदापि पश्यत देहपुरुषाणां एकता, विद्याग्रहणं, कठोरश्रमत्वं प्रत्युत्पन्नां च मतिं। सर्वे गुणाः अद्भुताः। तन्निर्जनप्रदेशस्य सकन्टकसीमा अन्तर्राष्ट्रीयराजमर्गार्थं एकस्थाने भिन्ना अस्ति यत्रतः उग्रपन्थिनः बहुधा अन्तःप्रविशन्ति विशेषतः चेत् देहदेशः स्वसीमानिकषा तान् सहेत देहदेशस्य च सुरक्षाप्रणाली निर्बला जायेत किंचिदपिकारणैः यथा गृहयुद्धात्, दुर्भिक्षात्, कुप्रबन्धनात्, कर्तव्यविमुखतया देशप्रेमहीनतया च। तेषु उग्रपन्थिषु अन्तःप्रविष्टेषु ते देहसैनिकैः हन्यन्ते परं अनेकाः देहदेशस्य निर्जनसजनक्षेत्रसीमायां देहसैनिकैः अलक्षिताः गुप्तरूपेण वसन्तः लुन्ठनहत्यादिकुकर्मभिः स्वजीवनं यापयन्ति। चतुरतया ते एकवारं सीमितमात्रायामेव अपराधं कुर्वन्ति येन महत्सेना तत्क्षेत्रे न प्रविशेत्। सीमितसेनां ते सरलतया उल्लन्घयन्ति। कदाचित् स्वोपयुक्तकालेप्राप्ते ते देहदेशविरुद्धं उग्रतया आक्रमन्ति यदा संपूर्णदेशः उच्चसतर्कतायां अवस्थायां तिष्ठन् अत्यधिकक्रियाशीलः एकप्रकारेण ज्वरयुक्तः जायते। सुसन्साधनसंपन्ना महत्सेना तीव्रयोद्धृभिः सह पीडितक्षेत्रे तीव्रतया प्रविशति। महत्संग्रामः प्रारभते। घातकप्रहारैः अनेकाः नागरिकाः अपि हन्यन्ते अनेकाः संरचनाः चापि भस्मीभूयन्ते। एकसार्धमेव सर्वदेहपुरुषाणां अतिक्रियाशीलतया उत्पन्नेन देहदेशज्वरेण उग्रपन्थिनः पूर्वतः एव हतोत्साहिताः। किंचिदपि शिथिलता देहदेशस्य स्वसैनिकानां आवश्यकतापूर्तिप्रति उग्रपन्थिनां विजयस्य कारणं यत्परिणामतः देहदेशे सुप्रबन्धीसुमार्गीदिवानां देहपुरुषाणां कुप्रबन्धीकुमार्गीभिः असुरैः देहासुरैः अधिग्रहणं। विपरीततः शत्रुस्वच्छताभियाने सफले भूते देहदेशः निष्कन्टकः जायते येन तत्सीमाक्षेत्रनिकषा नवसाम्राज्यनिर्माणाकान्क्षिणः राजपरिवारजनाः निर्भयाः विकसन्ति। अभियाने अर्धसफले भूते छलेन मुष्टाः शत्रवः नवदेशविकासे विघ्नकराः येन नवदेहदेशः तनावक्लिष्टः पूर्णविकासात् प्राक् एव पितृदेशात् पलायते, तत्सहायितः चापि बहुधा जीवितुं असमर्थः। कदाचित् अनभिज्ञस्य देहदेशस्य निजदोषेण अपि नवजातदेशः यथोचितकालपूर्वं एव पलायितुं बाध्यः यद्यपि तत्पश्चात् सः तं प्रेम्णा प्रचुरतया सहायते तद्विकासार्थं।

यद्यपि सर्वे देहपुरुषाः युद्धविद्यासह सर्वविद्यासु निपुणाः परं सर्वविद्याज्ञानेन सर्वविद्यानां व्यावहारिकप्रयोगः कदापि न दृश्यते यदेव पुरुषसंबन्धे अपि तथ्यं। यतोहि चित्तवृत्तयः एव संकल्पकर्मरूपाः, अपि च पुरुषानुभूताः चित्तवृत्तयः देहदेशस्य प्रबन्धकेषु देहपुरुषेषु यद्यपि तैः अननुभूयमानाः उदयन्ति, याः एव अनुभूयन्ते देहरूपाकारस्य अहंकारिणा पुरुषेण। आश्चर्यं यत् सर्वाणां प्रबन्धकदेहपुरुषाणां चित्तवृत्तीः पुरुषः न अनुभवति अपितु केवलं तेषु विशिष्टायाः अतिलघुसन्ख्यायाःएव। पुरुषः अपि देहपुरुषवत् चिदाकाशात्मस्वरूपः एव आसीत् पुराकाले कदाचिदपि चिदाकाशभिन्नस्य असंभवत्वात् परं सः आसक्त्या मिथ्यायां बद्धः। तद्भ्रमितबुद्धिपुरुषात् अहंकारविद्या तत्सन्ततिभिः गृहीता ताभ्यः तत्सन्ततिभिः च। एवमेव एतत्परंपरा गृहस्थधर्माः शाश्वतीः अनायासा भौतिकतामुखा जीवबन्धका। अधिकांशप्रबन्धकाः स्वक्रियाकलापानां चित्तवृत्तीनां वा पुरुषेण अनुभवनं न अपेक्षन्ते। क्षुद्रसन्ख्यकप्रबन्धकाः एव पुरुषेण तत्चित्तवृत्तीनां अनुभवनं अपेक्षन्ते देहदेशजगद्देशसमायोजनार्थं येन देहदेशः जगता सह आदानप्रदानेन जीवितुं अर्हति। एतदनुभवनं आसक्त्या न अपेक्ष्यते यतोहि अनेन केवलं अल्पसन्ख्यकाः एव देहदेशाः उन्नीयन्ते बहुसंख्यकदेशानां बलिदानस्य विनिमये। एवमेव देहदेशे अपि उन्नयनं क्षणिकं असन्तुलितं चैव आसक्त्या क्षेत्रवादस्य कर्मवादस्य च संभावनया। यथा स्थूलदेशस्य राजा पक्षपातरूपिणा आसक्त्या स्वदेशं नाशयति तथैव सूक्ष्मदेशस्य राजा स्थूलपुरुषः अपि देहदेशं। चेत् आसक्तेन पुरुषेण सुप्रबन्धनं आयासजं अनुस्थीयेत् तर्हि अपि तेन स्वसहजस्य आत्मानन्दस्य बलिदानस्य विनिमये एव। आसक्त्या मानसिकं दैहिकं च संतुलनं अपि दुष्प्रभाव्यते।

दिवसकालिकेन अनवरतेन श्रमक्लाम्येन श्रान्ताः देहपुरुषाः रात्रौ आगतायां स्वसंकल्पाः कर्माणि च मन्दयन्तः गहननिद्रायां प्रविशन्ति प्रभातकाले च तत्चित्तवृत्तिजागरेण सह पुनः जागरन्ति। निद्रायां ते अज्ञानीपुरुषवत् अचिदाकाशरूपाः न भवन्ति अपितु यथावत् पूर्णाः चिदाकाशात्मरूपाः एव तिष्ठन्ति जागृतस्वप्नकालिकचित्तवृत्तिप्रति अनासक्तिजातस्वचिदाकाशाविस्मरणात्। वास्तवेन देहपुरुषवत्

अनासक्त्या आसक्तिः आवश्यका समाधिसिद्ध्यर्थं।

सर्वे जीवाः सदैव विभिन्नमात्राभिः अनावृतचिदाकाशरूपाः एव सन्ति यस्मिन् अनावृतभागः चित्तवृत्त्यधिष्ठितः चिदाकाशः। पूर्णानावर्णं केवलं चित्तवृत्तिप्रति अनासक्त्या एव संभवं। चित्तं कदाचित् व्यक्तरूपं अचिदाकाशसहचित्तवृत्तिरूपं वा कदाचित् च अव्यक्तम् केवलाचिदाकाशरूपं वा। एतद्व्यक्ताव्यक्तोभयचित्तरूपप्रति अनासक्तिः आवश्यका या देहपुरुषध्यानात् सुकरात् चिदचिदद्वैतात् संभवा।

यथा कश्चिज्जनः अज्ञातिभिः जनैः अज्ञातिभिः स्थानैः च न विचाल्यते अपितु आत्मानन्दं लभते तानि प्रति स्वाभाविकात् अनासक्तिप्रभावात तथैव अनासक्तिसिद्धपुरुषः प्रत्येकप्रकाराभिः चित्तवृत्तिभिः देहपुरुषवत्। परिवेशपरिवर्तनात् पर्यटनाच्च अपि आत्मशान्तिलाभस्य एतदेव अनासक्तिसिद्धान्तः। लघुपरिचितजनैः परस्त्रीभिः वा एतदेव।

अनुभूतानन्दमपि अनासक्तिसिद्धान्तेनैव संभवं। वस्तुतः आत्मानन्दं एव वास्तविकानन्दं यत् केवलमात्रं अनासक्त्या एव संभवं। भयात् साहसिककर्मेभ्यः वा आनन्दं अपि अनासक्त्या एव। "पर्वताः दूरतः रम्यन्ते" एतदुक्तिः अपि अनासक्तिजन्यानन्दमेव प्रदर्शयति। पठनेषु, लेखनेषु, कथासु, दन्तकथासु, उपन्यासेषु, किंवदन्तीषु अन्येषु च अविश्वसनीयेषु प्रकरणेषु आनन्दोपलब्धिः अनासक्तिजन्या एव। अनासक्तिजनकेषु अपि उपायेषु संस्कृतभाषायां पुराणकथाः सर्वाधिकाः सफलाः सन्ति संस्कृतस्य चित्ताग्निप्रज्ज्वलनकरस्वभावात् सेन्द्रियजगतः चिदाकाशात्मस्वरूपतायाः प्रदर्शनार्थं, कथानां प्रत्यक्षेण असत्यत्वात् अनासक्तिजननार्थं अप्रत्यक्षेण च सत्यत्वात् पठनप्रेरकरोचकतायै। चेत् वस्तुषु चित्तवृत्तिषु वा आनन्दं अभविष्यत् तर्हि मनोरमवस्तु मनोरमव्यक्तिः वा केनचिदपि कदाचिदपि च न अरोचिश्यत्। कस्मैश्चित् आनन्दं तन्मान्यमनोरमवस्तुना केवलं तद्वस्तुसह उत्पादितस्मरणेभ्यः यत्प्रति अनासक्तिः स्वाभाविका तद्वस्तोः बाह्येन्द्रियेभ्यः दूरत्वात्। अतः सिध्यति यत् आनन्दं वस्तुभिः चित्तवृत्तिभिः वा न उत्पाद्यमानं अपितु ताः प्रति अनासक्त्या एव उत्पद्यते। विरहेण यत् प्रेमानन्दं प्रवर्धते तदपि अनासक्त्या एव जन्यते। एवमेव परहितकर्मणि, परादिष्टकर्मणि, कर्तव्यकर्मणि क्लिष्टकर्मणि चापि अनासक्तिः एव विद्यते। गीतनाटकादिकलासु पठनलेखनादिविद्यासु च आनन्दं अनासक्तिमूलं एव अस्ति इद्दशगतिविधिषु स्वार्थाभावात् मनसः पूर्णतः विलयनात् च। विज्ञानविषयः अरुचिकरम् इव भाति तत्प्रति सत्यत्वबुद्धित्वात् ततः आसक्तित्वात्, अतः एषः रुचिकरः जायेत् वैदिकपौराणिकपुरुषसान्निध्यात ऋषिगुरुज्ञानीसान्निध्यात् वा येन तदनासक्तिबुद्धिः अनयासमेव विज्ञानेन सम्मिलति। वास्तवेन अनासक्तियुक्ता चित्तवृत्तिः एव आनन्दकारणा, आसक्तियुक्तचित्तवृत्तिः तु आत्मानन्दं क्षाययति एव। विभिन्नदेवैः मानुषवेशैः चिदाकाशरूपैः क्रियमाणाः मानुषीक्रियाः कर्मकान्डादिविद्यासु अपि केवलं अनासक्तिकौशलस्य शिक्षणार्थमेव।

अनासक्तिभावः अद्वैतभावः च उभौ ज्ञानस्य पुत्रौ। तदज्ञानं आध्यात्मिकं वा भौतिकं वा उभयं वा व्यर्थं, आडम्बरमात्रं मनोदेहविलासं चैव चेत् तेन अनासक्तिः, अद्वैतं एतत्सह च सर्वे मानवीयगुणाः न उपद्येयुः। यथा आत्मज्ञाने प्राप्ते अनासक्तिः स्वयमेव उत्पद्यते तथैव अनासक्तौ सिद्धे आत्मा अपि स्वयमेव अनुभूयते येन सिध्यति यत् शरीरविज्ञानदर्शनं एव समस्तलोकसधारणकर्मठजनताभ्यः अति सुलभं,सुकरं भौतिकाध्यात्मिकोभयलाभकरं च अर्थात् उभयहस्तयोः मोदकरूपं। यथा परमात्मा देहपुरुषशरीरं पूर्णतया निपुणतया अद्वैतेन च जीवयति तथैव सः तत्समतुल्यं पुरुषशरीरं अपि जीवयितुं समर्थः अतः परमात्ममोषकपरमात्माकाशलेखारूपीमनबुद्ध्याद्यन्तःकरणसहजगत्प्रत्यनासक्तिः आचरणीया परमात्मप्राप्तये प्राप्तात्मस्वरूपस्य सुरक्षायै च।

स्थूलसमाजस्य विधिनियमादेशवत् देहपुरुषाः अपि स्वसमाजे सदैव सर्वाधिकोपयुक्तां मान्यां समस्थितिं निर्मीय तिष्ठन्ति यद्यपि रोगोन्मूलनार्थं ते किंचित्कालं विषमस्थितिमपि निर्मान्ति यथा आपातकाले स्थूलसमाजान्दोलनं परं ते आत्मना पुरुषवत् न आन्दोलयन्ति अनासक्तिप्रभावात्। वास्तवेन अनासक्तिः देहपुरुषभावनया अद्वैतेन एव सुगमा नैव पृथक्तया।

देहपुरुषमस्तिष्के सर्वाः निर्माणयोजनाः निर्माणपूर्वमेव निर्मिताः तिष्ठन्ति तथैव यथा ब्रह्मदेवस्य मनसि सृष्टिनिर्माणयोजनाः, अपि च एतत्सर्वाः युक्तियुक्तयोजनाः ते स्वसन्ततिभ्यः अपि शिक्षयन्ति परं ते ताः न स्मरन्ति तथैव यथा पुरुषः ब्रह्मस्वरूपः यस्मिन् च ब्रह्मणः समस्तशक्तयः परं सः स्वरूपविस्मृतः। यथा देहपुरुषनवजातेन निजस्वरूपः निजशक्तयः च न विस्मृताः भवन्ति चित्तभ्रमन्यूनत्वात् तथैव साधुपुरुषेण नवजातपुरुषेण चापि। एतदाश्चर्यं यत् आत्मस्मृतिः, आत्मविस्मृतिः चित्तभ्रमः च देहपुरुषेण बाह्यतः एव प्रदर्श्यन्ते, आत्मना आसक्तात्मना वा नैव परं पुरुषेण आत्मना आत्मासक्त्या वापि।

उपरोक्तेन अल्पस्मृतात्मस्वरूपेण आत्मशक्तिभिः च एव देहपुरुषाः स्वसर्वकर्तव्याणि परिलक्ष्य व्यावहारिकतया तानि क्रियान्वितानि कुर्वन्ति यद्यपि अद्वैतेन। पुरुषाः त्वपि एवमेव आचरन्ति, यद्यपि द्वैतेन।

देहपुरुषाः अनेकप्रकाराणि प्रचुररूपाणि उपलब्धानि अन्नानि जलानि च भविष्ये प्रयोगार्थं भन्डारगृहेषु संगृह्णन्ति, किंचित्सीमितसीमायां उपलब्ध्यनुसारं एव तानि उपयोजयन्ति कदापि च तेषां अपव्ययं न कुर्वन्ति स्थूलदेशवत्। कदाचित् सूक्ष्मदेशैः भन्डारणीयैः अतिप्लावितानि भन्डारगृहाणि नीतिनियामकस्य प्रशासनस्य दोषात् अत्युत्पादनात् च भंजयन्ते ततः च भन्डारणाक्षमाणि, अपि च उपलब्धान्नस्यापि नाशः बाह्यवातावरणीयप्रकोपेभ्यः। अनेन देहदेशः आपात्कालार्थं अन्नभन्डारणं कर्तुं न शक्नोति येन देहदेशः प्रतिक्षणं अन्नोत्पादनार्थं बाध्यः अन्यथा देहदेशस्य महद्हानिः तत्पुरुषाणां क्षुधामृत्युना। स्थूलदेशे अपि एवमेव दृश्यते। अपि च किंचिदुपभोगशेषानि अभन्डारणीयानि अन्नानि प्रतिदिनं देहदेशात् बहिः उत्सृज्यन्ते यथा स्थूलदेशे दुग्धं। संभवतः स्थूलदेशस्य आधुनिकदुग्धसंग्रहणवत् देहदेशे अपि भविष्ये एतद्व्यवस्था विकसेत्।

देहपुरुषाः स्वमित्रदेहपुरुषान् प्रति कृतज्ञतां अपि प्रदर्शयन्ति। ते शत्रुनीतिस्मर्तृसैनिकान् पुनःसंभावितयुद्धार्थं भविष्ये कदाचिदपि, जीवनपर्यन्तं सेवन्ते रक्षन्ति च। स्थूलदेशः अपि एवमेव विशेषज्ञानुभवीजनसेवां उपयोजयति। आश्चर्यं जायते यत् एतावन्महद्कर्माणि देहपुरुषाः आसक्तिं विना कथं कुर्वन्ति। चेत् ते कुर्वन्ति तर्हि स्थूलपुरुषाः अपि कर्तुं शक्नुवन्ति यतोहि उभयोः सर्वकर्माणि समानानि अतः केवलं महदभ्यासमेव अपेक्ष्यन्ते।

चेत् केवलं चित्तवृत्तिभिः एव आत्मानन्दं अभविष्यत् तर्हि तदासक्तः दुराचारी चापि एतत् अलभिष्यत्। अतः वास्तवेन चित्तवृत्तिनिरोधनं न ध्येयं अपितु चित्तवृत्तिसह अद्वैतभावनं एव परमध्येयं यत् शविदेन एव संभवं। पुरुषाय जीवनसफलता

एकातिकठिना परीक्षा यतोहि चित्तवृत्तयः एकसार्धं ग्रहणीयाः त्याज्याः च यत् केवलं देहपुरुषवत् अनासक्त्या एव संभवति। यथा गुरुत्वचालितस्य नदीजलस्य अधोप्रवृत्तिरोधनं गुरुत्वविरुद्धारोहणम् च जलबन्धभित्तिविद्युद्यन्त्रादिनिर्मितबलं अपेक्षेते तथैव अज्ञानचालितचित्तासक्तिरोधनं अपि वर्तमानभविष्यकालिकचित्तवृत्तिप्रति आसक्तिनिवारणार्थं तथा पुराकालिकचित्तवृत्तिभ्यः आसक्तिभावनिर्मूलनार्थं ज्ञानं अपेक्षते यत् शरीरविज्ञानरूपयन्त्रेण सहजतया एव जायते। यथा किंचिद्विधिना गुरुत्वे नष्टे तद्बलं न अपेक्ष्यते तथैव पूर्णतया अज्ञाने नष्टे समाधौ प्राप्तौ वा।

चित्तवृत्तीः किंचित् धावयित्वा शरीरविज्ञानदर्शनानुध्यानात् अनासक्तिलाभः जायते येन आत्मा शुध्यति। यतोहि पुरुषः देहपुरुषः च बाह्यरूपेण पूर्णौ समतुल्यौ स्तः अतः आन्तरिकरूपेणापि समरूपौ एव सिध्यतः, "यथाचारं तथा विचारं" इत्येतदोक्त्यनुसारं परं केवलं एकमेव कल्पितभिन्नतया यत् पुरुषः आसक्त्या द्वैतरूपः अतः आनन्दहीनः परं देहपुरुषः अनासक्त्या अद्वैतरूपः अतः परमानन्दरूपः।

शरीरविज्ञानदार्शनिकः प्रतिक्षणं अनन्तोपचारेण भगवत्स्वरूपान् देहपुरुषान् पूजयति यतोहि देहपुरुषाः तद्देहे एव अवस्थिताः। नदीनदसरसागरादिसर्वैः जलस्रोतजलैः स्नापयति, पाद्याचमनीयाभिषेकशुद्धोदकाद्युपचारान् समर्पयति। विविधसुगन्धयुक्तवायुरूपैः नानाधूपैः आघ्रापयति। औषधिभिः चिकित्सयति। अनेकप्रकारेषु वाहनेषु उपस्थाप्य भ्रामयति अपि। जीवनमुक्तेश्वररूपान् तान् एव विविधशब्दरूपैः अनेकैः स्तोत्रैः स्तौति विविधध्वनिरूपैः च अनेकैः वाद्यैः हर्षयति। गुरुवाणीसदृशान् देहपुरुषैः उद्गीरितान् शब्दान् शृणोति ततः अनुकरोति च। अनेकप्रकाराभिः खाद्यसामग्रीभिः तान् भोजयति। नेत्ररूपीदीपेन तान् प्रकाशयति। अनेकविधमानवीयमनोरञ्जनैः, मानवीयसंकल्पकर्मरूपिभिः सोद्देष्यव्यायामैः योगभोगाद्यनन्तविधैः चोपायैः तान् रञ्जयति। एवमेव शरीरविज्ञानदार्शनिकेन कृताः सर्वमानवीयाः व्यवहाराः ईश्वरपूजारूपाः एव सन्ति।

आत्मा त्वं गिरिजा मतिः, सहचराः प्राणाः शरीरं गृहं।
पूजा ते विषयोपभोग रचना, निद्रा समाधिः स्थितिः।।
संचारः पदयोः प्रदक्षिणविधिः, स्तोत्राणि सर्वौ गिरौ।
यत्यत् कर्म करोमि तत्तदखिलं शंभो तवाराधनं।।

एतत् उपोरक्तमन्त्रं वयं शरीरविज्ञानदर्शनस्य सूक्ष्मरूपं अपि कथितुं अर्हामः। एतदपि उपरोक्तशविदपूजां वेदमूलां कथयति।

पुरुषस्य सर्वानुभूतयः तत्कर्मनियन्त्रकाः चित्तवृत्तयः एव सन्ति याः देहपुरुषस्य चित्तवृत्तिरूपाः एव सन्ति पूर्णरूपेण उभयप्रकारदेहाभ्यां कृतानां कर्मणां समानत्वात्, अतः यथा पुरुषाः चित्तप्रति अनासक्त्या आसक्तिजातं चिदाकाशस्वरूपात्माच्छादनं न अनुभवन्ति तथैव शरीरविज्ञानदार्शनिकः अपि। पूर्वकृतया आसक्त्या विस्मृतः आत्मा अपि तेन शविदेन एव पुनः स्मृयते।

कदाचित् पुरुषस्य मनोदेहोत्तेजना अवसादनं वा अल्पप्राणमयस्य देहपुरुषस्य उत्तेजनावसादवत् उपजायते पर्याप्तप्राणवायुप्राप्त्यर्थमेव या स्थूलसमाजसह सूक्ष्मसमाजाय अपि अहितकारं, अतः प्राणायामेन निवार्यं। एतदाश्चर्यं यत् उपरोक्ते उत्तेजनारूपे चित्तवृत्तिझन्झावाते वा चित्तशून्ये वा अवसादे वा अपि देहपुरुषः अच्युतरूपः एव तिष्ठति चित्तानासक्तेः पूर्णत्वात्। चेत् किंचिद्घोरपरिस्थित्या शविदकः स्वपूर्णे प्रयासे कृते अपि आत्मविभ्रमं अनुभवति तर्हि तद्विकटपरिस्थित्युपरान्तं स्वशान्तव्यवहारेण शविदप्रदत्तेन स्वमूलात्मरूपं शीघ्रमेव पुनः स्मरति। देहपुरुषस्मरणात् तेन पुनः समत्वं उपभुज्यते।

वास्तवेन कर्मणा एव मुक्तिः उपजायते यतोहि कर्मसु क्रियमाणेषु एव चित्तवृत्तयः प्रस्फुरन्ति येन शविदसाहाय्येन मुक्तिकराद्वैतप्रापकः अनासक्तिकरः अवसरः लभ्यते। अनन्तस्वरूपदेहपुरुषस्य जीवनचर्याविषये अधिकेन उक्तेन किं यतोहि यद्यत् पुरुषैः आसक्त्या अनुभूयते आचर्यते च तत्सर्वं तदधिकं अपि च तैः अनासक्तिपूर्वकं अद्वयात्मना वा अनुभूयते आचर्यते च। शविदं वेदैः सह विश्वस्य सर्वधर्मदर्शनसम्मतं अस्ति यतोहि सर्वैः लक्षिता मुक्तिप्रापका अनासक्तिः अत्र केवलं शरीरस्थेभ्यः देहपुरुषेभ्यः एव प्रमुखतया शिक्ष्यते, कुत्रचिदपि शरीरात् बहिर्गमनं हित्वा। एतत् न मन्तव्यं यत् देहपुरुषेषु चित्तवृत्तयः न उदयन्ति यतोहि तैः पुरुषकर्मसमतुल्यकर्माणि तत्समतुल्याभिः चित्तवृत्तिभिः एव संभवानि। अतः सिध्यति यत् पुरुषस्य मुक्तिः तेन देहपुरुषाचरणसदृशेन आचरणेन अर्थात् तेन मानवीयकर्मप्रेरकचित्तवृत्तिप्रति अनासक्त्या एव उपजायते, नैव चित्ताभावेन, अमानवीयचित्तेन आसक्त्या च। एतदेव सर्वशास्त्रैः अनुमोदितमपि। शविदस्य सारः एतदेव अस्ति यत् अनासक्तिः जगत् त्यक्त्वा न प्राप्यते अपितु अनासक्तस्वभावे अनुष्ठिते अपि यदा पुरुषः कदाचित् किंचिद्विवेकच्युत्या जगत्प्रभावात् आसक्तिसह स्वचित्तं अनुभवति तदैव चेत् सः चित्तानुभवरहितस्य कर्मपरकदेहपुरुषस्य वर्णकं शविदं आश्रयति तर्हि तेन मध्यमार्गः स्वतः एव अनुसृयते, अर्थात् तस्य अनुभवः आसक्तिराहित्यं स्वयमेव आप्नोति।

शविदं किंचिदपि अध्यात्मशास्त्रस्य विकल्पं नास्ति अपितु अनुपूरकं एव अस्ति। अनासक्तिः चित्तस्य पूर्णानुभवसह अल्पानुभवसह वा। अल्पानुभवेन जगत्कार्याणि सहयोज्यन्ते तथा पूर्णानुभवेन आत्मजागृतिः जायते। यतोहि जगत्प्रपन्चे अनुभूते अपि अनुभवराहित्यं अद्वैतं वा चिदाकाशे स्थित्या एव संभवं अतः सिध्यति यत् देहपुरुषाः चिदाकाशरूपाः एव यतोहि ते देहजगद्प्रपन्चे अनुभूते अपि अनुभवहीनाः। चेत् देहपुरुषः पुरुषवत् अज्ञानात् अचिदाकाशात्मस्वरूपः अभविष्यत् तर्हि तद्वत् सच्चिदानन्दप्राप्तये अवश्यमेव देहजगत अन्वभविष्यत् येन स्वदेहासक्तिजातया कर्तव्यच्युत्या तेन देहजगत् न समभविष्यत्। देहपुरुषभावनेन व्यर्थसंकल्पस्य चिदाकाशे विलयनं जायते सार्थकेन च संकल्पेन सार्थकानि मानवीयानि कर्माणि क्रियन्ते।

शविदस्य मूलभूतः साधनासिद्धान्तः एतदेव अस्ति यत् पुरुषः शविदं क्षणिकया वक्रया च दृष्ट्या एव अवलोकयन् भवेत् निरन्तरतया, वर्तमानान् संकल्पान् अनवरुद्ध्य येन संकल्पध्यानभंगात संकल्पेभ्यः, शविदध्यानेन शविदात् चापि उभाभ्यां एकसार्धमेव अनासक्तिलाभः प्राप्यते। एतदेव अस्य परमसिद्धान्तः, एतदेव अस्य परमसिद्धान्तः।

देहपुरुषे अपि समस्तप्रकाराः त्रिगुणभावाः विद्यन्ते पुरुषसमतुल्याः, उभाभ्यां कार्यनिर्वहणे पूर्णसमकक्षत्वात् परं सः तान् पृथक्तया न अनुभवन् आत्मलेखान् इव अनुभवति चेत् सः पुरुषवत् योगादिबन्धननिवारकक्रियाणां कर्ता इव मन्येत्, परं चेत् सः पूर्णचिदाकाशात्मस्वरूपः इव मन्येत् तेन अपि सः अनुभवकर्ता इव कथयिष्यते सर्वानुभवानां चिदाकाशांशस्वरूपत्वात्। अनुभवहीनता अचिदाकाशता वा तस्मिन् लेशमात्रमपि न सिध्यति कर्मन्यूनतारहितसृष्टेः परिचालनार्थं शाश्वतचिन्मयतायाः आवश्यकत्वात् तथैव यथा अस्मदनुभूतिन्यूनत्वे अस्मत्कर्मन्यूनता उपजायते। एकान्यरहस्यं कथ्यते। अनादिकालात् देहपुरुषः चिदाकाशरूपः एव अस्ति अतः

तदात्मतरंगरूपाः चित्तवृत्तयः तेन अनादिकालसिद्धात् आत्मस्थितौ अभ्यासवशात् किंचिदपि न अनुभूयन्ते, अतः सः परमरजोगुणप्रभवकाले अपि अच्युतात्मरूपः एव अवतिष्ठति, विपरीततः पुरुषः अनादिकालात् अचिदाकाशरूपः, अतः चिदानन्दार्थं चिदाकाशांशरूपचित्तं आसक्त्या अनुभवन् अस्ति येन सिध्यति यत् स्वचित्तस्य पूर्णाननुभवनं न संभवं परं अद्वैतेन आभासिकाननुभवनं संभवं यदेव मुक्त्यर्थं पर्याप्तं। अद्वैतयुक्तेन रजोगुणेन एव मुक्तिप्रापकस्य तीव्रसतोगुणस्य पृष्ठभूमिः निर्मीयते।

अद्वैतनिष्ठा एव परमज्ञाननिष्ठा अतः मुक्तये सर्वश्रेष्ठसाधना अस्ति, अपि च अद्वैतप्राप्तेः सर्वोत्तमविधिः देहपुरुषभावनं एव अस्ति यतोहि केवलं एकमात्रया द्वैतकल्पितभिन्नतया पुरुषः अद्वैतभावहीनः देहपुरुषरूपः एव अस्ति। अनेन निष्कृश्यते यत् देहपुरुशसह मित्रता कर्तव्या येन तदद्वैतस्वभावः अस्मासु प्रविशेत यतोहि सजातीयमित्रता एव प्रगाढतमा परमफलदा च भवति। हास्यविनोदैः, कथाभिः, नाटकैः अन्यानेकैः च कल्पितसंस्मरणैः आत्मानन्दः ततः शान्तिः तत्प्रति अनासक्त्या एव उद्भूयते तत्प्रति सत्यबुद्धेः अभावात्।

पुरुषोत्तमेन तद्भिन्नविचाराय तद्भिन्नस्वभावाय च पुरुषाय पूर्णता न प्रदीयते तथैव यथा द्रव्यसंपन्नेन व्यक्तिना तत्स्वरूपविपरीताय सेवकाय विशेषं आत्मीयद्रव्यं।

देहपुरुषाः आवश्यकतापूर्णेन प्राणवायुग्रहणेन स्वदैहिकानि सर्वकार्याणि तनावराहित्येन पूर्णरीत्या कुर्वन्ति। एवमेव सिद्धपुरुषैः अपि चिदाकाशात्मभावनेन धारणाध्यानसमाधित्वात् वा पूर्णश्वासः स्वयमेव गृह्यते येन तनावराहित्यं अनुभूयते यत्फलतः तैः अधिककार्यक्षमता प्रदर्श्यते। अनेन सिध्यति यत् देहपुरुषाः चिदाकाशरूपाः। नवजाताः पुरुषाः सर्वश्रेष्ठाः कर्मयोगिनः यतोहि तद्देहेषु मानवतापरकानि देहदेशनिर्माणादिकार्याणि अनासक्त्या परमवेगेन अनुष्ठीयमानानि भवन्ति देहपुरुषैः। अनेन एव नवजाताः परमप्रियाः प्रतीयन्ते।

देहपुरुषाः स्वसत्तार्थं कदापि सामाजिकानि कर्तव्याणि न त्यजन्ति अतः सिध्यति यत् ते चिदाकाशरूपाः एव सन्ति यतोहि चेत् ते अचिदाकाशरूपाः अभविष्यन् तर्हि आनन्दार्थं पुरुषवत् स्वचित्तवृत्तिरूपाः चिदाकाशस्फुरणाः अवश्यमेव अन्वभविष्यन् येन तैः चित्तबन्धनजाकर्तव्यच्युतिः अवश्यमेव अभविष्यत्। उदाहरणतः मृत्युभयात् देहसैनिकपलायनं समभविष्यत् येन देहदेशं शत्रवः क्षणमात्रे एव अव्यापादयिष्यन्। एवमेव चेत् ते अचिदाकाशरूपाः अभविष्यन् तर्हि जड़पुरुषवत् कर्मप्रवृत्ताः न अभविष्यन्।

वास्तवेन देहपुरुषस्य शरीरे अपि पुरुषदेहसमाजतुल्यः संपूर्णसमाजः विद्यते यस्मिन् कर्मविभाजनं पूर्णतया तद्वदेव अनुष्ठीयते उदाहरणतः तत्र यानचालकजनाः स्वचालिते सूक्ष्मयाने उपभोज्यसामग्रीः स्थापयित्वा सूक्ष्मराजमार्गेषु तान् नयन्ति आनयन्ति च। तत्र भण्डारगृहाणि भन्डारकजनाः चापि विद्यन्ते। तस्मिन् जलविभागः जलाशयाः चापि विद्यन्ते। तस्मिन् ऊर्जाविभागः तापविद्युतगृहाणि चापि विद्यन्ते। एवमेव सर्वाणि सामाजिकरचनानि तदतिसूक्ष्मदेशे विद्यन्ते तथा सर्वाणि सामाजिककार्याणि तत्रस्थपुरुषैः अद्वैतेन अनासक्त्या च क्रियन्ते। अनेन सिध्यति यत् एषा देहदेशपरंपरा अनन्ता, अपि च न कश्चिदपि पुरुषः एतां उल्लन्घितुं समर्थः अतः पलायनं हित्वा देहपुरुषवत् आचरणीयं।

स्वनिकटमृत्युज्ञः पुरुषः अपि कर्माणि न जहाति, तस्मै सर्वाधिकावश्यकत्वात् मोक्षस्य अतः सिध्यति यत् मुक्तिः केवलं कर्मजा। स्वरक्षणार्थं भोजनार्थं च प्रवृत्तिः देहपुरुषवदेव परमसाधारणेषु चेतनजीवेषु अपि विद्यते यद्यपि ते चित्तस्फुरणाः आसक्त्या अनुभवन्ति अपि। एतदेव सत्ताप्रति प्रवृत्तिः मस्तिष्कहीनेषु घटपटादिप्राकृतेषु पदार्थेषु अपि तथैव दृश्यते येन सिध्यति यत् देहपुरुषः अपि तद्वदेव सत्ताप्रति प्रवृत्त्यर्थं चित्स्फुरणाः न अपेक्षन्ते अर्थात् ते शुद्धचिदाकाशरूपाः एव सन्ति।

पुरुषः कटुस्मरणैः मनोविकारान् आश्रयति परं देहपुरुषस्मर्ता सर्वान् विगतान् परिस्थितीः स्मृत्वा अपि कामक्रोधभयादिद्वैतकारकान् विकारान् न अनुभवन्ति। वास्तवेन देहपुरुषदेहः अतिलघुः परं पुरुषस्य सान्तःकरणः विशालदेहः चित्तवृत्तिरूपः एव अर्थात् देहपुरुषात्मांशः एव अतः बाह्यरूपेण पुरुषे विशालतरे दृष्टे अपि देहपुरुषः एव विशालतमदेहः, यतोहि आत्मदेहः एव वास्तविकः,नैव स्थूलः बाह्यदेहः। एतदोक्तिः न सत्या यत् पुरुषाः जटिलरूपाः, जटिलकर्मकराः जटिलस्वभावाः च अतः बद्धाः यतोहि देर्हपुरुषाः अपि चित्तवृत्तिभिः सह पूर्णतः पुरुषसमतुल्यजटिलाः, तत्समतुल्यकर्मकराः तत्समतुल्यजटिलस्वभावाः च परं अनासक्त्या एव मुक्तरूपाः सन्ति।

चेत् सर्वविद्यासु तद्विद्यासंबन्धीचित्तवृत्तयः एव विद्यारूपाः वास्तविकतया, तर्हि पूर्णचित्तयोगी देहपुरुषः सर्वविद्यासु परमविशारदः। यथा देहपुरुषाः आत्मना किंचिदपि न वान्छन्तः मानवीयकर्माणि कुर्वन्ति तथैव जीवनमुक्ताः अपि आत्मानन्दपूर्णत्वात्, यद्यपि यथाशरीरेण वाञ्छितं। यथा कश्चित् प्रेरकः सुहृदयः वा बाह्यरूपेण अनुकृते एव आत्मरूपेण अपि अन्वेष्यते तथैव देहपुरुषः अपि। यद्यपि सर्वे पदार्थाः चिदाकाशरूपाः परं देहपुरुषं हित्वा अन्यपदार्थानां अनुकरणेन पूजया च मानवताहानिः संभवा विशेषतः चेत् तेषां मनुष्यसदृशा पूर्णचेतनता न भावयेत्, सर्वेषु निर्जीवपदार्थेषु पुरुषसदृषविकसितमनबुद्धेः प्रवृत्तेः च अभावात्। वास्तवेन देवानां जड़प्रतिमाचित्रादिषु देहपुरुषस्य चेतनमनुष्यस्य भावना कर्तव्या, न जड़पदार्थानां भावना। चेत् पृथ्वी पुरुषदेहसमाकारा निर्मीयेत् तर्हि पुरुषः तद्स्थाः देहपुरुषवत् चक्षुभ्यां न द्रक्ष्यन्ते परं यन्त्रसहायतया दृष्टेषु पूर्णतः तत्समतुल्याः एव विविधाकाराः, आन्तरिकबाह्यांगधारकाः आचरकाः च द्रक्ष्यन्ते। वास्तवेन जडासु मूर्तिप्रतिमासु अपि चेतनदेवताः प्रतिष्ठाप्यन्ते याः अनासक्तपुरुषरूपाः देहपुरुषरूपाः वा, तर्हि एव तदाराधनालाभः। विधर्मिणः पूर्णचेतनब्रह्म निरालंबेन पूजयितुं प्रयतन्ते परं तैः वास्तवेन जड़प्रकृतिः अव्यक्तः वा एव पूज्यमाना जायते अनिच्छया अपि यतोहि पूर्णब्रह्म सद्यः पूजयितुं कोऽपि सर्वसामान्यः गृहस्थः न समर्थः। यथा द्वैतदृष्टिकोणः बन्धनकरः परं अद्वैतदृष्टिकोणः मुक्तिकरः तथैव शरीरविज्ञानं बन्धनकरं परं शरीरविज्ञानदर्शनं मुक्तिकरं। वैदिकसंस्कृतिमिश्रितम् विज्ञानमपि शरीरविज्ञानदर्शनतुल्यं मुक्तिकरं एव। चेत् एतत्शविदं कर्मक्लेशजातद्वैतानन्तरं मनसि अवधार्येत तर्हि अतीवानन्दं उपजायते। एतत् कृत्रिमदर्शनं नास्ति यतोहि एतत् अनादिकालात् स्वयंसिद्धं। एतद्दर्शने केवलं तत्तथ्यानि एव वर्णितानि यानि शरीरे स्वाभाविकतया विद्यन्ते, नैव जीवात्मनिर्मितानि अतः एतत् दर्शनं पूर्णतः वैज्ञानिकं प्राकृतिकं च। प्रवृत्तिविना अद्वैतं निष्फलं। देहपुरुषवत् प्रवृत्तिषु अद्वैतं एव शोभनं फलप्रदम् च। एतदेव शरीरविज्ञानदर्शनस्य परममूलसारं।

अतः पुरुषः सदैव देहपुरुषवत् अद्वैतेन सद्गृहस्थे एव तिष्ठन्, केवलं मानवीयविधिभिः एव ईश्वरपूजावत् मानवतार्थं आचरन्, समस्याभिः अपि शिक्षन् तद्वत् चैव चिदाकाशस्वरूपः शाश्वतसुखेन तिष्ठेत्, तद्वत् एव चिदाकाशात्मस्वरूपः शाश्वतसुखेन तिष्ठेत्।

इति श्री।

## प्रेमयोगी वज्र के द्वारा लिखित अन्य पुस्तकें-

1) शरीरविज्ञान दर्शन- एक आधुनिक कुण्डलिनी तंत्र (एक योगी की प्रेमकथा)
2) Love story of a Yogi (what Patanjali says)
3) Kundalini demystified (what Premyogi vajra says)
4) कुण्डलिनी रहस्योद्घाटित- प्रेमयोगी वज्र क्या कहता है
5) कुण्डलिनी विज्ञान – एक आध्यात्मिक मनोविज्ञान
6) kundalini science- a spiritual psychology